॥ श्रीः ॥

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः

५६

अलंकारविभागे (१) प्रथमपुष्पम् ।

केशवमिश्रकृतः

# अलङ्कारशेखरः ।

साहित्योपाध्याय-वेतालोपाह्वश्रीअनन्तरामशास्त्रिणा
भूमिकादिभिः संभूष्य संशोधितः ।

प्रकाशकः—
जयकृष्णदास-हरिदास गुप्तः—
चौखम्बा संस्कृत सीरीज आफिस,
विद्याविलास प्रेस-गोपालमंदिर के उत्तर फाटक,
बनारस सिटी ।

१९८४

THE

# KASHI-SANSKRIT-SERIES

( *HARIDAS SANSKRIT GRANTHAMĀLĀ* )

56

( Alaṇkāra Section No. I. )

THE

# ALAṄKĀRAŚEKHARA

by

KES'AVA MIS'RA.

Edited with Introduction etc.

BY

ANANTARĀMA S'ĀSTRI VETĀL
Sāhityopādhyāya,
Late Sādholāl Research Scholar & Post-Āchārya Scholar,
Govt. Sanskrit College, Benares.

*PRINTED PUBLISHED & SOLD BY*
*Jai Krishna Das Hari Das Gupta*
The Chowkhamba Sanskrit Series Office,
Vidya Vilas Press, North of Gopal Mandir Benares City.

1927.

॥ श्रीः ॥

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः

५६

अलंकारविभागे (१) प्रथमपुष्पम् ।

केशवमिश्रकृतः

# अलङ्कारशेखरः ।

साहित्योपाध्याय-वेतालोपाह्वश्रीअनन्तरामशास्त्रिणा
भूमिकादिभिः संभूष्य संशोधितः ।

प्रकाशकः—
जयकृष्णदास-हरिदास गुप्तः—
चौखम्बा संस्कृत सीरीज आफिस,
विद्याविलास प्रेस-गोपालमंदिर के उत्तर फाटक,
बनारस सिटी ।

१९८४





॥ श्रीः ॥

# प्रस्तावना ।

## उपक्रमः ।

अथैष मुद्रापयित्वा प्रकाशयितुमुपक्रम्यते अलङ्कारशेखरो नाम श्रीमन्महाराजमाणिक्यचन्द्रकारितः श्रीकेशवमिश्रविरचितोऽलङ्कारशास्त्रीयो ग्रन्थः । उपयोगिनो ग्रन्थस्यास्य सर्वतोऽद्यत्वे दुर्लभत्वमाकलय्य 'विद्याविलास'मुद्रणालयस्वामिना प्रेरितोऽहमेतत्प्रकाशने सोत्साहं प्रावर्तिषि । काव्यमालायां शिलायन्त्रालये च समुचितपदच्छेदाभावादिदोषबाहुल्येन यथाकथंचिन्मुद्रितचरोऽपि साम्प्रतमयं नोपलभ्यत इति प्रकाशनमस्य साम्प्रतमेव ।

## अलङ्कारशब्दस्य काव्यगतसकलविषयबोधकता ।

ग्रन्थग्रन्थकारयोर्यथावत्परिचयाय ग्रन्थारम्भे किमपि प्रस्तावनादिकमवश्यं लेखनीयमिति पूर्वपरम्परानुगतं पन्थानमवलम्ब्य किञ्चित्प्रसङ्गोचितमिदानीं निरूप्यते । तत्र तावत्प्रकृतग्रन्थनामधेयविषयिणीं मीमांसां पुरस्कृत्य 'किं नाम अलङ्कारशास्त्रम् ? कथं चास्य काव्यशास्त्रव्यवहारयोग्यता ? केन चेदं प्रथममाविष्कृतम् ?' इति विषयानवलम्ब्य विचारः प्रस्तूयते—'अलङ्क्रियतेऽनेने'ति व्युत्पत्त्या काव्यशोभाकराणामुपमादीनामलङ्काराणामेव चमत्कृतिजनकतया विश्वेश्वरपण्डितराजानकरुय्यकविरचितयोः अलङ्कारकौस्तुभालङ्कारसर्वस्वयोः प्राधान्येन निरूपणादत्रापि 'अलङ्कारशेखरे' अलङ्कारमात्रं प्रतिपाद्यो विषय इति कल्पना नूनं नामधेयमदसीयमवलोक्य समुत्पद्येत, परं ग्रन्थपर्यालोचनया स्फुटं प्रतीयेत यदसौ कल्पना न तावत्सर्वथा सामञ्जस्यमावहति । इह खलु काव्योचिताः सर्व एव गुणदोषालङ्कारादयो विषया निरूपिताः सन्ति । अलङ्कारशब्दश्चिरन्तनात्समयाल्लक्षणरूपकाव्यशास्त्रव्यवहारयोग्यतामधिगतो दृश्यते । तथाच 'अलङ्कृतिरलङ्कार' इति व्युत्पत्त्या अलङ्कारशब्दस्य सौन्दर्यपरत्वाभ्युपगमेन काव्यालङ्कारशिरोरत्नायिते अलङ्कारशेखरनाम्नि अलङ्कारग्रन्थे काव्यविषयकं गुणदोषालङ्कारादिनिरूपणं समुचितमेव । अलङ्कार-

शास्त्रं हि काव्यरचनोचितां दिशं दर्शयित्वा चमत्करोति सचेतसां चेतांसि। यत्खलु काव्यस्वरूपं निरूप्य दोषगुणरीतिरसालङ्काराणामवधारणे शक्तिमुन्मेषयति, तत्तावदलङ्कारशास्त्रं निगद्यते। काव्यनिर्माणकलाकौशलानि लोकोत्तरविलक्षणानि नान्यत्र विलसन्ति। सहृदयहृदयानन्दसाधनं नान्यदस्तीति सर्वोत्कृष्टमिदमलङ्कारशास्त्रम्।

सत्यपि काव्यप्रपञ्चेऽलङ्काराणां प्राधान्ये, तत्र शास्त्रे कथमिव काव्योचिताः सर्वेऽपि विषया गुणदोषादयः सन्निवेश्यन्ते इति बलीयसीं शङ्कां समाधातुं तद्बीजमन्विष्यते—पूर्वे किल वाल्मीकिप्रभृतयो लक्ष्यैकचक्षुषः शक्तिशालिनो महान्तस्तानि तानि काव्यानि प्रणीय विविधं लोकोपकारं रचयाम्बभूवुः। ततस्तथैवान्येऽपि काव्यरचनासु प्राभवन्। परं काव्यनिर्माणौपयिकान्नियमान् अविज्ञाय कथं नाम सर्वेऽपि लक्षणैकचक्षुषो मन्दास्तत्र प्रवर्तेरन्निति तेषामुपदेशाय काव्यशास्त्रं लक्षणरूपं नियामकं निरमीयत। तस्य च अलङ्कारशास्त्रमिति सङ्केतः समजनि। ततश्च अनित्यधर्माणामप्यलङ्काराणां चमत्कृतिजनकत्वेन तत्कृतचारुत्वस्यैव काव्यव्यवहारहेतुतया, प्रतीयमानमर्थं वाच्योपस्कारकतयाऽलङ्कारपक्षनिक्षिप्तं मन्वानैः प्राक्तनैर्भामहादिभिः 'अलङ्क्रियतेऽनेन' इति करणव्युत्पत्त्या 'प्राधान्येन व्यपदेशा भवन्ती'ति नयेन अलङ्कारा एव काव्ये प्रधानमिति सिद्धान्तितम्। इत्थंविधे व्यवहारे प्रचलिते 'रीतिरात्मा काव्यस्य, वक्रोक्तिः काव्यजीवितम्, रसः काव्यात्मा, काव्यस्यात्मा ध्वनिः, नित्यधर्मा गुणाः काव्ये प्रधानम्' इति विविधान् पक्षानुपक्षिपतां वामनादीनां समये 'अलङ्कृतिरलङ्कारः' इति भावप्रधानां व्युत्पत्तिमवलम्ब्य काव्यशास्त्रेषु रसादिप्रतिपादकेषु अलङ्कारत्वव्यवहारः प्रावर्तत। तादृशमेव पन्थानमनुसृत्य श्रीमन्मम्मटभट्टैर्विरचितः 'काव्यप्रकाशो' नाम अलङ्कारशास्त्रीयो निबन्ध आकरशास्त्रं लक्षणशास्त्रं वेति प्रसिद्धिं गतः सर्वेष्वलङ्कारग्रन्थेषु मूर्धन्यतामधिगच्छति। तदनन्तरमन्येऽपि लक्षणग्रन्थाः शनैः शनैः प्रादुरभूवन्। 'सौन्दर्यमलङ्कार' इति वामनोक्तालङ्कारलक्षणानुसारतोऽप्यलङ्कारशब्दस्य दोषाभावगुणालङ्कारकृतसौन्दर्यपरत्वेन तत्प्रतिपादकं शास्त्रं 'अलङ्कारशास्त्र'मिति स्थाने सङ्केतमासादयति। तदनुसारेणैव तादृशशास्त्रप्रणेतार आलङ्कारिका उच्यन्ते। तथाविधं शास्त्रमुपजीव्य लक्षणलक्षितानि बहूनि काव्यानि बहुभिर्नि-

मितानि। तस्मादेव कालादारभ्य लक्ष्यलक्षणरूपविभागद्वयकल्पनया काव्यमलङ्कारश्चेत्युभयविधो व्यवहारः प्रववृते।

अत्र च अलङ्कारशास्त्रे विविधानि दर्शनानि व्यवस्थितानि। तथा हि अलङ्कारसर्वस्वटीकायां समुद्रबन्धे—'इह विशिष्टौ शब्दार्थौ काव्यम्। तयोश्च वैशिष्ट्यं धर्ममुखेन व्यापारमुखेन व्यङ्ग्यमुखेन वेति त्रयः पक्षाः। आद्येऽप्यलङ्कारतो गुणतो वेति द्वैविध्यम्। द्वितीयेऽपि भणितिवैचित्र्येण भोगकृत्त्वेन वेति द्वैधम्। इति पञ्चसु पक्षेष्वाद्य उद्भटादिभिरङ्गीकृतः, द्वितीयो वामनेन, तृतीयो वक्रोक्तिजीवितकारेण, चतुर्थो भट्टनायकेन, पञ्चम आनन्दवर्धनेन। व्यक्तिविवेककाराभिमतस्त्वनुमानपक्षः सिद्धान्तप्रदर्शनसमनन्तरं विचारासहत्वेन दूषितत्वात् मङ्खुकस्य पूर्वपक्षत्वेनाऽप्यनभिमतः' इति। एतस्मिन्पक्षपञ्चके ध्वनिकृताऽऽनन्दवर्धनाचार्येणाद्रियमाणश्चरमः पक्ष एव बहुशः सर्वैरङ्गीक्रियते। विचार्यमाणे सत्युचितमेतदेव प्रतीयते। अत्र बहुवक्तव्येऽपि विषये विस्तरभिया साम्प्रतं मौनमेवावलम्ब्यते।

'अलङ्कारशास्त्रं हि पूर्वं केनाऽऽविष्कृतम्' इत्यत्र यथावन्निर्णयस्तावत्कर्तुं दुःशक एव। तथापि प्रसिद्धेषु अलङ्कारग्रन्थेषु कालिदासकृतेरुदाहृतत्वात् कालिदासादुत्तरस्मिन्नेव काले तस्य विशेषतो व्यवहारयोग्यता जातेति कल्पयन्ति केचित्। किन्तु नाट्यशास्त्रदर्शनेन कालिदासात्पूर्वकालेऽप्यस्य सत्ता आसीदिति निर्विवादं सिध्यति। नाट्यशास्त्रे हि अलङ्कारादिवर्णनं सर्वमप्युपलभ्यते। अद्यावधि उपलब्धेष्वलङ्कारनिबन्धेषु भामहस्यैव काव्यालङ्कारः शास्त्रीयग्रन्थेषु साम्प्रतं प्रथमाभिधेयतामधिगच्छति। भामहीयकाव्यालङ्कारस्य प्राचीनतमत्वेन तस्मात्पूर्वभाविनोऽलङ्कारग्रन्थस्येदानीमनुपलम्भात् प्रायो भामहोपजीवितमलङ्कारशास्त्रमिति वक्तुं युक्तमेव।

## ग्रन्थपरिचयः।

अयं च अलङ्कारशास्त्रीयः प्रबन्धः शौद्धोदनिकृतालङ्कारसूत्रव्याख्यानरूपः 'अलङ्कारशेखरो' नाम केशवमिश्रेण माणिक्यचन्द्रप्रेरितेन विरचितः। अत्र च काव्यस्वरूपरीतिदोषगुणालङ्कारादिकं नातिसंक्षिप्तं नातिविस्तृतं समुचितरूपेण सरलया भाषया वर्णितं वृत्तिकारेण।

इदानीं प्रकरणविभागनिर्देशपुरःसरं तत्रत्या विषया निरूप्यन्ते। विषयानुक्रमणिकायां विस्तरेण विषयविवेचने विद्यमानेऽपि स्थूलदृ-

शा विशेषविषयविवरणरूपेण ग्रन्थसमालोचनं प्रासङ्गिकमेवेति तत्रा-
वतीर्यते—अस्मिन्नलङ्कारशेखरे रत्नान्यष्टौ विलसन्ति। १ उपक्रमरत्नं, २
दोषरत्नं, ३ गुणरत्नम्, ४ अलङ्काररत्नं, ५ वर्णकरत्नं, ६ कविसम्प्रदायरत्नं,
७ कविसामर्थ्यरत्नं, ८ विश्रमरत्नं चेति तेषां नामानि। आदितस्त्रिषु
रत्नेषु मरीचयस्त्रयः, चतुर्थे चत्वारः, पञ्चमे त्रयः, षष्ठे चत्वारः, सप्त-
मे त्रयः, अष्टमे तु द्वाविति। एतादृशः प्रकरणविभागसङ्केता ग्रन्थना-
मोचिताः कविना कल्पिताः सुतरां शोभन्ते।

उपक्रमरत्ने प्रथमे मरीचौ—मङ्गलाचरणपूर्विकां ग्रन्थकारयितुर्वं-
शपरम्परां निरूप्य अलङ्कारविद्यासूत्रकारस्य शौद्धोदनेरभिमतं 'रसा-
लङ्कारभूषितं शब्दश्रवणाव्यवहितोत्तरकालावच्छिन्नसुखविशेषसाधनं
वा काव्य'मिति काव्यस्वरूपं प्रदर्श्य विशिष्टस्य तस्य कीर्त्यादिफ-
लसाधनत्वप्रतिपादनमुखेन तत्र प्रवृत्त्यौपयिकानि फलानि सङ्गृही-
तानि। किञ्च प्रतिभायाः कारणत्वं व्युत्पत्तेर्विभूषणत्वमभ्यासस्य
भृशोत्पत्तिकारित्वं चाभिधाय 'काव्यसरणिं परिशीलितवतां
शुद्धान्तःकरणानां सततं पर्यालोचयतां करतलगतैव कविता विल-
सती'ति तात्पर्यवतीं श्रीपादोक्तिमुद्भाव्य वृद्धसंमतानीतराण्यपि
कारणानि सङ्गृह्य प्रकारपरिज्ञानस्यापि कारणत्वनिरूपणौपयिकं
भारत्याः सलक्षणं सङ्क्षेपतश्चतुर्विधत्वं स्वमतेन दण्डिमतेन च
प्रदर्शितं ग्रन्थकारेण। द्वितीये मरीचौ—रीतिप्रपञ्चनिरूपणं विधाय
उक्तिमुद्रयोश्चातुर्विध्यमुदाहरणमुखेन प्रतिपाद्य 'एतासां प्रयोजनादि-
कमलङ्कारसर्वस्वे दर्शित'मिति 'अलङ्कारसर्वस्वं' नाम निजनिर्मितिः
सूचिता। तृतीये मरीचौ—पदवृत्तीस्त्रिविधा निर्दिश्य व्यञ्जनायाः
शक्यलक्ष्यव्यङ्ग्यात्मकत्रिविधार्थवृत्तित्वस्य संसाधनेन उत्तमादित्रि-
विधकाव्योदाहरणप्रदर्शनेन च व्यञ्जनोपयोगिता साधु सिद्धान्तिता।

दोषरत्ने प्रथमे मरीचौ—पूर्वप्रतिज्ञातं दोषाणां त्याज्यत्वं दण्डि-
मतेन प्रमाणीकृत्य दोषसामान्यलक्षणकथनपूर्वकं पददोषानष्टौ सौ-
दाहरणान् प्रादर्शयद्ग्रन्थकारः। द्वितीये मरीचौ—द्वादश वाक्यदो-
षानुदाहृत्य गोवर्धनसंमतं असमर्थसमासस्यापि दोषान्तरत्वमुद्-
भावयत्। तृतीये मरीचौ—अष्टानामर्थदोषाणामुदाहरणानि प्रदर्श्य

---

(१) परिशीलितकाव्यवर्त्मनां कविसंसर्गविशुद्धचेतसाम्।
परिभावयतामनुक्षणं कविता पाणितले निषीदति॥

लोकप्रसिद्ध्यपेक्षया कविप्रसिद्धेर्बलीयस्त्वमुदाहृत्य प्रागुक्तानां दोषत्वं समार्थयत् ।

गुणरत्ने प्रथमे मरीचौ--गुणानां श्लाघ्यत्वं समर्थ्य सामान्यतो गुणस्य द्वैविध्यं च निगद्य पञ्चविधशब्दगुणप्रदर्शनमुखेन तत्रैवेतरेषामन्तर्भावमुक्तवान् । तृतीये मरीचौ-'पूर्वोदीरितानां दोषाणां स्थानविशेषेष्वदोषत्व'मिति कारिकोक्तं वैशेषिकगुणलक्षणं प्रकाश्य केषांचिन्मतेन 'तत्र दोषाभावमात्रत्वं न गुणत्वम्', अन्येषां मतेन 'सहृदयप्रतीतिसाक्षिकं गुणत्वं दोषाभावत्वं वे'ति सूचयित्वा 'रसप्रतिबन्धरहिते स्थले दोषाभावत्वं युक्त'मिति श्रीपादमतप्रतिपादनेन पदेषु यथासम्भवमदोषत्वमुदाहृत्य आत्मनः श्रीपादस्य च संमतं सर्वसाधारणमदोषत्वं निरूपितवान् ।

अलङ्काररत्ने प्रथमे मरीचौ—कारिकयोक्तपूर्वमलङ्काराणां शोभास्पदत्वं संसाध्य अलङ्कारसामान्यलक्षणकथनपुरस्कारेण शब्दालङ्काराणामष्टविधानामुदाहरणान्युपस्यता वृत्तिकारेण यमकस्य संक्षेपतः सप्ताशीतिप्रकारत्वमुक्त्वा गोवर्धनमतेन तस्य चित्रादनतिरिक्तत्वं प्रतिपादितम् । द्वितीये मरीचौ--कारिकोक्तांश्चतुर्दश अर्थालङ्कारान् नामतो निर्दिश्य दशविधामुपमां समभिव्याहारोपमां च श्रीपादाभिमतामुदाहृत्य तत्र सर्वत्र न्यूनाधिक्यसम्भवेऽपि काव्यमहिम्ना साम्यं निरूप्य राजशेखरोक्तसाम्यवाचकशब्दपरिगणनपुरःसरं केशवमिश्रेण काव्यसम्पत्सर्वस्वरूपा अलङ्कारशिरोरत्नभूता उपमा कविकुलस्य मातृरूपत्वेन निर्दिष्टा । इत्थमेव अप्पय्यदीक्षितैरपि चित्रमीमांसायां सर्वालङ्काराणामुपमाविवर्तत्वं प्रतिपादितम् । तृतीये मरीचौ--रूपकस्य लक्षणं पञ्चविधत्वं च उदाहरणैः स्फुटीकृत्य तत्र द्विविधाया लक्षणाया अन्तर्भावमुक्त्वा तदुदाहरणे प्रदर्शिते । चतुर्थे मरीचौ--उत्प्रेक्षाया लक्षणोदाहरणप्रदर्शनं कृत्वा सर्वालङ्कारसर्वस्वभूतां कवेः कीर्तिवर्धिनीमुत्प्रेक्षां नवोढास्मितादिवन्मानसं

---

(१) अलङ्कारशिरोरत्नं सर्वस्वं काव्यसम्पदाम् ।
उपमा कविवंशस्य मातैवेति मतिर्मम ॥

(२) उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदान् ।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः ॥

हरन्ती निर्दिश्य समासोक्तिप्रभृतीनां विभावनान्तानामलङ्काराणां लक्षणोदाहरणे निरूप्य परमतानुसारमन्यदेशत्वविभावनाविशेषोक्तीनामेकतरस्वीकारेण तदितराऽन्यथासिद्धिकथनमुखेन व्यतिरेकाक्षेपयोरपि पूर्वोक्तेभ्योऽलङ्कारेभ्यः पार्थक्यमितरमतेनोक्तम्।

वर्णकरत्ने प्रथमे मरीचौ--योषिद्वर्णनप्रकारमुपदिश्य तदवयवानां तानि तान्युपमानानि स्वाभिमतानि श्रीपादानुसारिकविकल्पलताकारोक्तानि च सङ्गृह्य गोवर्धनोदीरिताः शरीरतदवयवयोर्वर्णनीया गुणाः प्रतिपादिताः। द्वितीये मरीचौ-पुरुषस्य तदवयवानां च वर्णनप्रकारानुपदर्श्य प्रशस्तार्थवाचकानि पदानि च परिगणय्य 'शिष्टप्रयोगानुसारेण सामुद्रिकाद्युक्तं सर्वमुभयोर्वर्णनीय'मिति सिद्धान्तो निरूपितः। तृतीये मरीचौ-सादृश्यप्रापकान् प्रकारान् दण्डिनोक्तांस्तत्प्रतिपादकान् शब्दांश्च निर्दिश्य कविघटनाया लोकतो वैलक्षण्यं प्रदर्शितम्।

कविसम्प्रदायरत्ने प्रथमे मरीचौ-कविसम्प्रदायस्य सर्वतोऽभ्यर्हितत्वं दिदर्शयिषुस्तस्य त्रैविध्यमभिधाय तत्प्रकारप्रदर्शनगर्भितान् कविसम्प्रदायसिद्धान् नियमान् सप्रपञ्चं न्यरूपयद् ग्रन्थकारः। द्वितीये मरीचौ-नृपादीन् वर्णनीयान्निर्दिश्य तद्वर्णनोचितान्प्रकारान् प्रादर्शयत्। तृतीये मरीचौ-चन्द्रादीनां श्वेतादिरूपैर्वर्णनात्मकं नियमान्तरं प्रत्यपीपदत्। चतुर्थे मरीचौ-एकद्व्यादिसंख्याबोधकान् शब्दान् पर्यजीगणत्।

कविसामर्थ्यरत्ने प्रथमे मरीचौ-प्रकारोपदेशगर्भं कवीनां प्रकर्षबीजकथनं प्रतिज्ञाय चित्रकाव्योपकारकाणि चत्वारि गतागतसमत्वादीनि प्रदर्शितानि। द्वितीये मरीचौ-कठिनसमस्यापूरणोचितान् स्वाभिमतान् श्रीपादराजशेखरवृद्धाभिमतांश्च सप्रपञ्चं प्रकारानुपदर्श्य तार्किकोक्तो वर्णनीयप्रकारविशेषः सङ्गृहीतः।

विश्रमरत्ने प्रथमे मरीचौ-काव्यात्मभूतं रसं विना काव्यस्य रसिकजनमनःसन्तोषाऽजनकतामुक्त्वा 'अङ्गाङ्गिभावापन्नसकलविभावादिसाक्षात्कारकत्व'मिति रसलक्षणं निरुच्य 'रसत्वमपि जातिरिति

---

(१) सर्वालङ्कारसर्वस्वं कविकीर्तिविवर्धिनी।
उत्प्रेक्षा हरति स्वान्तमचिरोढास्मितादिवत्॥

वयम्' इति साभिमानं स्वाभिमतं पक्षमुपाक्षिपद् वृत्तिकारः । ततः 'कारणकार्यसहकारिभिर्व्यज्यमानः स्थायी रस' इति केषांचिन्मतमुपन्यस्य सात्त्विकभावभेदप्रदर्शनपूर्वकं नवधा कारिकाकृता विभक्तेषु रसेषु सम्भोगविप्रलम्भात्मनः शृङ्गारस्य नायिकाया नायकस्य च भेदान्निर्दिश्य विप्रलम्भे शृङ्गाररूपत्वं समर्थयता केशवमिश्रेण 'काव्यरत्ने मया विस्तृतमिद'मिति स्वनिर्मितो ग्रन्थ आविष्कृतः। तथैव देवादिभ्योऽन्यत्र कान्तायां रतेः शृङ्गारात्मकत्वं श्रीपादमतेनोक्त्वा देवादिरतिमुदाहृत्य हास्यादिरसोदाहरणपुरःसरं रसानामविरोधविरोधावभ्यधायिषाताम्। ततो नवधा निर्दिष्टस्य स्थायिनः प्रत्येकं रत्यादीनां च लक्षणानि कथयित्वा सर्वेषु भावेषु स्थायिनो मुख्यत्वप्रतिपादनमुखेन विभावानुभावव्यभिचारिणो निर्दिश्य भावशवलताया उदाहरणं प्रादर्शि । द्वितीये मरीचौ-रसदोषान् सविस्तरं निरूप्य तदन्तर्गतस्य अनौचितीनाम्नो दोषस्य सर्वथा हेयत्वे महिमभट्टवचःप्रामाण्यं प्रदर्श्य दोषान्तरं चैकं निर्दिश्य क्वचिदेषामदोषत्वमपि सूचितम् । तृतीये मरीचौ-तत्तद्रसानुकूलानि छन्दोरीत्यक्षरादीनि संसूच्य वक्त्राद्यौचित्येन क्वचिद्वैपरीत्येऽप्यदोषत्वमुदाहरणप्रदर्शनमुखेन समर्थ्य सर्वसाधारणं दोषं सन्धिगतं वर्णदोषं च प्रतिपादयता ग्रन्थकारेण उपसंहारविधया प्रबन्धोऽयं समाप्तिं नीतः ।

अस्मिन् किल प्रबन्धे-काव्यलक्षणं बह्वंशेन साहित्यदर्पणोक्तं तल्लक्षणमनुसरति । काव्यकारणानि च निरूपितानि वैशिष्ट्यं दर्शयन्ति। तिस्रो रीतयो, दोषाश्च अष्टाविंशतिः, अलङ्कारसहस्रेषु सत्स्वपि अत्यावश्यका गुणा नव, 'अपरेऽत्रैवान्तर्भवितुमर्हन्ति' इत्यपरान्निषिध्य चतुर्दशैव अर्थालङ्काराः प्राधान्येन तेषूपमाया दश प्रभेदाश्च निरूपिता दृश्यन्ते । उपमोत्प्रेक्षयोस्तावत् सर्वालङ्कारेभ्यः साधितमुत्कृष्टतमत्वं केशवमिश्रेण । स्त्रीपुंसयोः वर्णनौपयिकाः प्रकाराश्च भूयांसः सङ्गृहीताः सन्ति । कविसम्प्रदायसिद्धास्ते ते वर्णनप्रकारा ग्रन्थान्तरेभ्यो वैलक्षण्यमावहन्तः कवीनामुपकारकाः सविस्तरं प्रतिपादिता उपयोगिताऽतिशयं प्रकाशयन्ति । दुष्करसमस्यापूरणोचितानां प्रकाराणां सङ्ग्रहोऽपि सम्यक्समुद्भासते । रसं विभावादिभिर्व्यज्यमानमन्ये मन्यन्ते । केशवमिश्रस्तु 'अङ्गाङ्गिभावापन्नानां सकलविभावानां साक्षात्कारको रस' इत्थं मनुते । एतावानेव आपाततोऽत्र वि-

शेषः प्रतीयते, सर्वमन्यत्समानमेव ग्रन्थान्तरेण । इत्थमत्राऽल्पीयस्यपि गुणगौरवेण श्लाघनीये अलङ्कारशेखरप्रबन्धे कविना चातुर्येण सर्वे विषयास्तथा समावेशिताः, यथाऽसौ ग्रन्थः सहृदयानामुपकाराय भूयसे मनोविनोदाय च प्रभवेत् ।

## ग्रन्थकारपरिचयः ।

ग्रन्थपरिचयौपयिकमेतावन्तं विषयं विलिख्य साम्प्रतं ग्रन्थकारस्य परिचयं प्रदर्शयितुं समयादिकं च निरूपयितुं प्रसङ्गतोऽत्र ग्रन्थे समापतितानां ग्रन्थकाराणां च परिचयं प्रदानुमुपक्रम्यते । तत्र तावत् कारिकाकर्ता ग्रन्थकारयिता ग्रन्थकर्ता चेति त्रयाणां परिचयप्रदानं कर्तुमावश्यकमिति पूर्वं कारिकाकर्तुर्विषये किञ्चिदुच्यते—प्रबन्धान्तर्गतः कारिकाभागो यः किल सूत्रनाम्ना व्यवह्रियते, शौद्धोदनिना विरचितोऽस्तीत्युपक्रमोपसंहाराभ्यां सिद्धमेव । स चायं शौद्धोदनिर्वामनश्चेति द्वावेव अलङ्कारसूत्रकारत्वेन प्रसिद्धौ । ईशवीयद्वादशशताब्द्या अनन्तरं कारिका निर्मितेति संभाव्यते । शौद्धोदनिरिति वास्तविकं नाम ? आहोस्विद्बौद्धमतानुयायिनोऽलङ्कारसूत्राणि प्रणेतुः कस्यापि स्वेष्टदेवतानुकूलस्तादृशः सङ्केतो वेत्येतद्विषये किमपि नैव निश्चेतुं शक्यम् । नामैतत् कुत्राप्यन्यत्रालङ्कारग्रन्थेषु नोपलभ्यते ।

साम्प्रतं ग्रन्थकारयितुर्विषयमवलम्ब्य तेन सहैव ग्रन्थकर्तुरपि विषये विचार्यते—केशवमिश्रं ग्रन्थकर्तृत्वे नियोजयन् माणिक्यचन्द्रस्तु तीरभुक्ति (तिरहुत) राज्यमलङ्कृतवानिति एग्लिङ् (Eggeling) मतम्[1]। नृपालोऽयं काश्मीराधीश्वरो नासीत्। इन्द्रप्रस्थसमीपे यवनानां विजयात्पूर्वमधिवसति स्म[2]। केशवमिश्रेण प्रदर्शिता ग्रन्थकारयितुर्वंशपरम्परा 'कोटकांगडा'ऽधीशितुर्माणिक्यचन्द्रस्य वंशपरम्परया सह संवादं भजतीति प्रस्तुतो माणिक्यचन्द्रः 'कोटकांगडा'ऽधीश्वराऽभिन्न एवेत्यत्र नापेक्ष्यते प्रमाणान्तरप्रदानं किमपि। कणिंघं (Cunningham) मतानुसारेण माणिक्यचन्द्रस्य राज्यारोहणं १५६३ मिते ईशवीये वर्षे समभूत्। अयं च दशवर्षावधिं राज्यशासनमकरोत्।

अस्य पिता धर्मचन्द्रः (घपुस्तकानुसारेण सोमचन्द्रः) पितामहश्च

---

१ Kāṇe: Introduction to साहित्यदर्पण P. CXXIX.

२. S. K. De: Sanskrit Poetics Vol. 1, P. 261.

रामचन्द्र आसीत्। वंशश्चैतदीयः 'सुशर्मे'त्याख्यया सङ्केतितः। रामचन्द्रो हि—परिपन्थिपार्थिवध्वंसकर्ता चरणशरणीकृताऽनेकभूपालः साम्राज्यश्रिया नहुषं शिथिलयन् सुहृदो गोपायन् जगदानन्दयन् प्रतापाग्निभिः शत्रूनन्तः सन्तापयन् देवद्विजवृन्दं सन्तोषयन्मनस्वी सप्तसमुद्रमेखलायितां सुचिरमशासद्वसुन्धराम्[१]। कदाचित्काबिल-(काबुल)भूपालेन सह दिल्लीधराधीश्वरस्य भीषणे सङ्ग्रामे सम्प्रवृत्ते तदन्तिकस्थोऽयं रामचन्द्रभूपतिर्भूयसः शत्रुवीरान् निहत्य स्वयमपि तामेव गतिं जगाम[२]। तस्मात् प्रतापशाली स्वर्गसुन्दरीगीयमानकीर्तिः परिपन्थिभूपतिप्राणापहारेण तत्सीमन्तिनीः स्वातन्त्र्यमार्गं प्रापयन् धर्मचन्द्रः समुदपद्यत[३]। ततो वैरिभूपालराज्यलक्ष्मीसुखोपभोग-

---

१ आसीत्प्रत्यर्थिपृथ्वीरमणकमलिनीवृन्दहेमन्तमासः
कीर्तिभ्राजत्सुशर्मान्वयकुमुदवनीयामिनीजीवनाथः।
राजद्राजन्यराजीमुकुटमणिगणप्रोल्लसत्पादपीठः
प्रोद्यत्साम्राज्यलक्ष्मीशिथिलितनहुषो रामचन्द्रोऽवनीन्द्रः॥
मित्राणि प्रतिपालयंस्त्रिजगतीं कीर्तीन्दुनाऽऽह्लादयन्
शत्रूणां हृदयं प्रतापदहने रात्रिन्दिवं ज्वालयन्।
सर्वस्वेन कृतार्थयन् द्विजगणान् देवान्मखैस्तोषय-
न्नेष प्रौढमनाश्चिराय बुभुजे सप्तार्णवां मेदिनीम्॥

२ सुत्रामोद्दामदिल्लीपरिवृढविलसत्काबिलक्षोणिभर्त्रोः
प्रक्रान्ते प्रौढयुद्धे समदलयदसौ कोटिशो वैरिवीरान्।
पश्चान्मांसास्थिमेदःकलुषितवसुधां प्रोज्झ्य तांश्चाकलय्य
द्यां यातान्वैरिवर्गान् दिवमपि सहसा जेतुकामो जगाम॥

३ क्षीराम्भोधेः शशीव श्रुतिरिव वदनाद्वेधसो रामचन्द्रा-
दस्मादुद्यत्प्रतापः समजनि सुमना धर्मचन्द्रो नरेन्द्रः।
यस्याद्यापि प्रसन्नस्मितसुभगमुखाः स्विद्यदश्रुत्कपोला
रोमाञ्चस्तम्भभव्यास्त्रिदशयुवतयो हन्त गायन्ति कीर्तीः॥
निष्क्रान्तं सदनादुदैक्षि भगवानम्भोजिनीवल्लभ-
स्ते वाताः परिशीलिताः कमलिनीसौरभ्यमेदस्विनः।
विश्रान्तं गिरिकाननेषु निबिडच्छायेषु भाग्योदया-
दित्थं स्मेरमुखाः स्तुवन्ति विपदं यद्वैरिवामभ्रुवः॥

भाग्यशाली सकलगुणसम्पन्नो माणिक्यचन्द्रो जनुर्लब्धवान्[१]। यः किल काव्यालङ्कारशास्त्रविन्मूर्धन्यः पार्थिवसार्वभौमः सर्वेषां काव्ये बुद्धिनैपुण्यमुत्पादयितुं वेदान्तन्यायतत्त्वज्ञं केशवं नियुज्य अलङ्कारशेखराख्यं ग्रन्थममुं निर्मितवान्[२]। ११६० मिते ख्रीस्टवत्सरे सङ्केताख्यां 'काव्यप्रकाश'टीकां रचयितुर्माणिक्यचन्द्रादयं १५६३ मिते ईशवीये वर्षे 'कांगडा'राज्यमधिरूढो माणिक्यचन्द्रो भिन्न इति तावदुभयोः समयनिरीक्षणतः स्फुटमेव प्रतीयते।

प्रकृतप्रबन्धप्रणेता केशवमिश्रो हि जन्मना कतमं देशमलङ्कृतवान् किंजातीयश्चेति यथावन्नावगन्तुं शक्यते। सम्भाव्यते परं, यदसौ उत्तरदेशवासी मैथिलः स्यादिति। अस्य वेदान्तेषु न्याये च परमं प्रावीण्यमासीदिति ग्रन्थारम्भे 'वेदान्तन्यायविद्यापरिचयचतुरं केशवं सन्नियुज्ये'ति लेखतः प्रतीयते। तर्कविषयोन्मिश्रकाव्यग्रन्थनिर्माणकौशलमेवामुष्य काव्यन्यायविद्यानैपुण्ये प्रमाणमुपलभ्यते। अपिच काव्यशास्त्रीयामेतदीयां योग्यतामलङ्कारशेखर एव तावत्प्रकाशयति। स्वस्मात्पूर्वभाविनामाचार्याणां मतमनेन साधु विदितमासीदित्यस्य लेखतः सम्यगवगम्यते।

स्वातन्त्र्येण समयस्तु नैतस्य निर्णेतुं शक्यः, आश्रयदातुः समय एव समयमेतदीयं निर्णाययति। माणिक्यचन्द्रप्रेरणया केशवमिश्रो निबन्धमेनं निबबन्धेति माणिक्यचन्द्रसमये केशवमिश्रस्य सत्ता निश्चितैव। माणिक्यचन्द्रस्य राज्यारोहणकालस्तु १५६३ मितः ख्रीस्टाब्दः। अतस्तदाश्रितस्य केशवमिश्रस्यापि समयस्तत्कृतग्रन्थनिर्माणकालश्च षोडशशताब्द्या उत्तरार्धस्तृतीयभागो वा निःसंशयं निश्चेतुं शक्यते[३]।

---

१ प्रत्यर्थिभूपतिपरिग्रहराज्यलक्ष्मी-
धम्मिल्लमाल्यसुरभीकृतपाणिपद्मः।
तस्मादजायत समस्तगुणाभिरामो
माणिक्यचन्द्र इति राजकचक्रशक्रः॥

२ काव्यालङ्कारपारङ्गममतिरखिलक्ष्माभृतां चक्रवर्ती
सर्वेषामस्तु काव्ये मतिरतिनिपुणेत्याशये सन्निवेश्य।
वेदान्तन्यायविद्यापरिचयचतुरं केशवं सन्नियुज्य
श्रीमन्माणिक्यचन्द्रः क्षितिपतितिलको ग्रन्थमेनं विधत्ते॥

३ S. K. De: Sanskrit Poetics Vol. 1, P. 261.

अस्य तार्किकत्वं समीक्ष्य तर्कभाषाकृतः केशवमिश्रादयमभिन्न एवेति न साम्प्रतं कल्पयितुम्। १३४४-१४१९ ईशवीये वर्षे तर्कभाषाकर्तुः, अलङ्कारशेखरकारस्य च षोडशशताब्द्या उत्तरार्धे सत्ता परस्परमुभयोर्भिन्नतां व्यक्तमेवावगमयति। एतावदेव ग्रन्थकर्तुर्विषये मीमांसितुं पार्यते। कस्तावदस्य पिता भ्राता सुतो गुरुः शिष्यश्चेति किमपि न ज्ञायते।

'अलङ्कारसर्वस्वं काव्यरत्नं' चेति ग्रन्थद्वयं स्वकीयकृतित्वेन निरदिक्षत्केशवमिश्रः। कदाचिदिदं तत्प्रणीतसप्तग्रन्थान्तर्गतमेव स्यादिति कल्प्यते, न निश्चीयते परं तयोर्ग्रन्थयोरनुपलम्भात्। इत्थंच केशवमिश्रनिर्मितेषु ग्रन्थेषु अलङ्कारसर्वस्वं काव्यरत्नं चेति द्वयी नाम्नैवोपलभ्यते। अलङ्कारशेखरश्चायं नयनगोचरीभवत्येव। अन्ये तु ग्रन्था वस्तुतो नामतोऽपि नोपलब्धुं शक्यन्ते। केशवमिश्रेण किल 'आत्मना ग्रथितानि सप्त काव्यग्रन्थरत्नानि तर्ककर्कशबुद्धिभिरेवाऽऽकलयितुं शक्यन्त' इति पर्यालोचयता कामिनीचरणशोभमानमञ्जुमञ्जीरशिञ्जितसुन्दरोऽयं प्रबन्धः प्रणीतः[1]।

अत्र च श्रीपादनामधेयं बहुवारमुल्लिखितं दृश्यते। शौद्धोदनेरेवादरबोधकोऽयं सङ्केतः स्यात्किमु? अन्येष्वलङ्कारग्रन्थेषु प्रायो नास्य नामोपलभ्यते। राजशेखरभोजमहिमभट्टमम्मटभट्टादीनां ग्रन्थेभ्यो वाक्यान्युद्धृत्य यथाप्रसङ्गं ग्रन्थेऽस्मिन् सन्निवेशितानि व्याख्याकारेण। किञ्चात्र १८ पृष्ठे 'पत्रं श्रीजयदेवपण्डितकविस्तन्मूर्ध्नि विन्यस्यति' इत्यसमर्थसमासोदाहरणपद्ये जयदेवः पण्डितकवित्वेन निरदिश्यत। गीतगोविन्देऽपि 'जयदेवपण्डितकवेः'[2] इत्युपलभ्यते। अतो बहुधा

---

१ ग्रन्थाः काव्यकृतां हिताय विहिता ये सप्त पूर्वं मया
ते तर्कार्णवसंप्लवव्यसनिभिः शक्याः परं वेदितुम्।
इत्यालोच्य हृदा मदालसवधूपादारविन्दक्वण-
न्मञ्जीरध्वनिमञ्जुलोऽयमधुना प्रस्तूयते प्रक्रमः॥

२ तथाचेदं पद्यम् (सर्ग १२ श्लो० १०)—
यद्गान्धर्वकलासु कौशलमनुध्यानं च यद्वैष्णवं
यच्छृङ्गारविवेकतत्त्वरचनाकाव्येषु लीलायितम्।
तत्सर्वं जयदेवपण्डितकवेः कृष्णैकतानात्मनः
सानन्दाः परिशोधयन्तु सुधियः श्रीगीतगोविन्दतः॥

सम्भाव्यते, लक्ष्मणसेनराज्यसभायां विद्यमान एष एव जयदेवः स्यादिति।

एतद्ग्रन्थान्तर्गतानां ग्रन्थानां ग्रन्थकाराणां च परिचयः।

ग्रन्थकारादिपरिचये इत्थंरूपेण प्रवृत्ते, ग्रन्थेऽस्मिन् प्रमाणत्वेन सङ्गृहीतानां ग्रन्थनामतोऽप्यधिगतानां ग्रन्थकाराणां वर्णानुक्रमेण परिचयः संक्षेपतो वितीर्यते—

अलङ्कारसर्वस्वम्—एतत्प्रणेता केशवमिश्र एव, राजानकरुय्यको नास्तीत्यस्मादेव ग्रन्थादवगम्यते। रुय्यककृतं तु अलङ्कारसर्वस्वमन्यदेव।

कविकल्पलताकरः—अरिसिंहतो देवेश्वरतश्च भिन्नोऽयं सम्भाव्यते।

कादम्बरी—एतस्याः प्रसिद्धाया आख्यायिकायाः कर्ता बाणभट्टः। एष किल हर्षचरितपार्वतीपरिणयमुकुटताडितकादिप्रणेता हर्षवर्धनभूपतेः सभायामासीत्। हर्षवर्धनस्य राज्यकालश्च ६०६–६४८ मिताब्दपर्यन्तः। अतः षष्ठशतकोत्तरार्धे बाणस्य स्थितिरवधार्यते।

कालिदासः—आबालप्रसिद्धस्य विख्यातकीर्तेः काव्यनाटकत्रयीकर्तुः कविकुलचूडामणेरस्य समयनिर्णयं कर्तुं प्रयतमाना भूयांसो यथाप्रमाणोपलम्भं स्वस्वकल्पनानुसारेण तं तं समयं निरदिक्षन्। वैक्रमं प्रथमं शतकं तावत्तदीयं समयं युक्तमुत्पश्यामः।

काव्यरत्नम्—एतत्प्रणेता केशवमिश्रः पूर्वं प्रदर्शितपरिचय एव।

कुमारसम्भवम्—कालिदासमेतत्कर्तृत्वेन प्रसिद्धं को नाम न जानाति।

गोवर्धनः—सम्भाव्यते यदसौ लक्ष्मणसेनसभाश्रितस्य पूर्वोक्तस्य जयदेवस्य सहवासी स्यात्।

दण्डी—अयं किल भारवेः प्रपौत्र आसीदिति तत्कृतावन्तिसुन्दरीकथातः प्रतीयते। तत्रैवास्य वंशपरम्परा 'पश्चिमोत्तरप्रदेशे आर्यशिखारत्ने आनन्दपुरनाम्नि पत्तने समुद्भूता कौशिकगोत्रसन्ततिः अचलपुरस्थले न्यवात्सीत्। तद्वंशजनुषः, काञ्चीपुरीपरिवृढेन सिंहविष्णुना स्वपुरमानीतान्नारायणस्वामिनो दामोदरः (भारविः) उदपद्यत। तस्य पुत्रत्रितये मध्यमो मनोहरो वंशवर्धनकरोऽभवत्। तदात्मजन्मनां चतुर्णां मध्ये श्रीवीरदत्तः कनीयान् गौर्यां दण्डिनामानं सुतमजीजनत्' इत्थं विलोक्यते। 'नासिक'प्रान्तान्निर्गतेन भारविणा कृता-

१. S. K. De: Sanskrit Poetics Vol. 1, P, 262, 263.

श्रयस्य दुर्विनीतभूपते राज्यशासनकालस्तावत् ६०५-६५० परिमिताब्दपर्यन्तोऽस्ति। भारविश्च षष्ठशतकान्ते सप्तमशतकादावासीत्। ७२०-७३० यावत्समये दण्डिनः स्थितिर्ज्ञायते। अतः अष्टमशतकस्य पूर्वार्धे उत्तरार्धे वा तस्य सम्भवो युज्यते। 'षष्ठे शतके दण्डिनः सत्ते'-ति मेक्डोनल् (Macdonell) महाशयस्य वचनं तु विचारणीयमेव। दण्डिनिर्मितप्रबन्धत्रितयमध्ये तृतीयमेकं द्विसन्धानकाव्यं धनञ्जयकृताद्विसन्धानकाव्यतो भिन्नं शृङ्गारप्रकाशिकायां सूचितम्। दण्डिना कृताः काव्यादर्शदशकुमारचरितादयो ग्रन्थाः प्रसिद्धा एव।

नैषधम्—प्रसिद्धस्य काव्योत्तमस्य नैषधस्य कर्ता खण्डखाद्यादिविविधप्रबन्धनिबन्धनधुरन्धरः साहित्ये तर्के च सरस्वत्याः समानलीलाविलासप्रसादमधिगतः श्रीहर्षो हि कान्यकुब्जाधीश्वरस्य प्रसिद्धक्षत्रियकुलाङ्गारजयचन्द्रस्य पितरं गोविन्दचन्द्रभूपालमाश्रितो द्वादशशतकान्ते विद्यमान आसीत्।

भरतः—प्रसिद्धस्य नाट्यशास्त्रकर्तुरालङ्कारिकशिरोमणेः श्रीमतो भरतमुनेः समयनिरूपणं कर्तुमशक्यमेव।

भार्गवसर्वस्वम्—न ज्ञायते, कं विषयमवलम्ब्य केन वा ग्रन्थोऽयं निर्मित इति।

भोजराजः—धारानगर्यां राज्यासनमलङ्कुर्वाणस्य भोजस्य ९९६-१०५५ ईशवीयाब्दमितोऽस्ति समयः। अमुना हि विख्यातिमता तत्र तत्र शास्त्रेषु ते ते ग्रन्था निरमायिषत। एतन्निर्मितः 'शृङ्गारप्रकाशो' नामैको ग्रन्थो मद्रासराजकीयपुस्तकालये हस्तलिखितो विद्यते। म० म० कुप्पुस्वामिकृतवर्णनतः प्रतीयते, यदेष ग्रन्थः षट्त्रिंशत्प्रकाशात्मकोऽलङ्कारग्रन्थेषु सर्वेभ्यो महत्तम इति। चतुर्विंशतिः प्रकाशास्तत्र रसनिरूपणपराः। अस्मिन् ग्रन्थे शृङ्गारस्यैव सकलरसमूलभूतत्वं प्रतिपादितम्। एतत्प्रमाणोपष्टम्भेनैव 'शृङ्गारः प्रथमो रस' इति तदितरैरपि सिद्धान्तितम्।

महर्षिः—भरतमुनिरन्यो वा कश्चिदयं महर्षिरित्यत्र प्रमाणाभावान्निश्चयो न कर्तुं शक्यते।

महिमभट्टः—व्यक्तिविवेकनिर्माताऽसौ काव्यन्यायविचक्षणः प्रायो दशमशतके आसीत्।

माघः—अस्य पितामहः 'सुप्रभदेवो' नाम वर्मलातभूपतेर्मन्त्री। वर्मला-

---

१ सर्वमिदमन्यदप्येतद्विषयकमवन्तिसुन्दरीकथातोऽवगन्तव्यम्।

तस्य च कालः सप्तमशतकस्यान्तोऽष्टमशतकस्यारम्भः। अतः अष्टमशतकोत्तरार्धे माघस्य सत्ता सिध्यति। अनेन तावत् शिशुपालवधाभिधं कृतं काव्यं प्रसिद्धमेव। 'माघे सन्ति त्रयो गुणा' इत्युक्तिरस्मिन् वस्तुतो घटते।

रघुवंशम्—एतदाख्यां काव्यरूपां कालिदासस्य कृतिं विरल एव न जानीयात्।

राजशेखरः—अस्य हि काव्यमीमांसादिकर्तुः सरस्वतीपुत्रत्वेन प्रसिद्धिं गतस्य कालो दशमशतकारम्भः।

व्यक्तिविवेकः—एतत्कर्तुर्महिमभट्टस्य परिचयः पूर्वं प्रदर्शित एव।

शौद्धोदनिः—एतस्य अलङ्कारशेखराख्यग्रन्थस्य सूत्रकर्ता प्रसिद्धोऽयम्।

श्रीपादः—किमपि नास्य विषये पुनर्वक्तुमावश्यकमस्ति। वक्तव्यं पूर्वमुक्तमेव।

श्रीहर्षः—एतद्विषये लेखनीयं पूर्वं लिखितमेवेति न पुनर्लेखनावश्यकता।

श्रुतबोधः—छन्दःशास्त्रीयस्य ग्रन्थस्यास्य रचयिता कालिदास इति प्रसिद्धमेव।

## आदर्शपुस्तकपरिचयः।

अलङ्कारशेखरमिमं मुद्रापयितुं प्रवृत्तेन मया यानि यानि पुस्तकानि यतो यतः समुपलब्धानि, तत्तन्नामनिर्देशादिकमिदानीं विधीयते—पुस्तकमेकं (क) संज्ञकं शिलायन्त्रालये मुद्रितमशुद्धिबहुलं 'विद्याविलास'मुद्रणालयस्वामिनः सकाशादधिगतम्। द्वितीयं (ख) संज्ञकं निर्णयसागरे मुद्रितं शुद्धमशुद्धं च काशीस्थराजकीयसरस्वतीभवनतो लब्धम्। तृतीयं (ग) संज्ञकं प्रायः शुद्धमेव हस्तलिखितं काशीस्थराजकीयसरस्वतीभवनपुस्तकसङ्ग्रहान्तर्गतं पुस्तकं तत्पुस्तकालयाध्यक्षाणां खिस्तेश्रीनारायणशास्त्रिणां प्रसादादुपलब्धम्। पुस्तकमिदमादितः स्वल्पांशेन अन्ततश्च बह्वंशेन खण्डितमिति यावदुपलब्धात्तस्मादपि सुमहत्साहाय्यमभूत्। चतुर्थं च (घ) संज्ञकं लक्ष्मीधरपन्तधर्माधिकारिणां पुस्तकं शुद्धं सम्पूर्णं वरकलवैद्यनाथशास्त्रिसूचनया समासादितम्। पुस्तकं चैतत् ग्रन्थस्यार्धभागे मुद्रितेऽधिगतम्। यदि प्रथमत एवाधिगम्येत, तर्हि कियन्महानुपकारः स्यात्। अस्तु, तावतैव ग्रन्थसंशोधनं सुखेन साधु विधाय तत्रत्यपाठकल्पनया, पूर्वत्र स्थले आवश्यकान्समुचितान् पाठान् तत्पुस्तकस्थान् एकी-

कृत्य ग्रन्थान्ते संन्यवेशयम् । एतत्पुस्तकचतुष्टयीसाहाय्यमाश्रयन्नुपक्रान्तमिदं कार्यं कथमपि महता परिश्रमेण समपादयम्।

## उपसंहारः ।

पुस्तकस्यैतस्य मुद्रापणाय संशोधनकर्मणि प्रवृत्ते पुस्तकानामशुद्धीस्तत्तत्पाठभेदांश्च विलोक्य यथोचितं निर्णयं कर्तुमपारयत्ययोग्येऽपि मयि सहजकरुणापूर्णया दृशा सन्दिग्धेषु स्थलेषु निर्णयोचितविचारसूचनानुग्रहेण पूज्यतमाः श्रीमन्तः सुगृहीतनामधेयाः श्रीद्गुरुचरणा वात्सल्यभावातिशयं प्राकाशयन्निति तेन महतीं सहायतामाधगतवतो यदभून्मे महत्कार्यम्, तत्र विषये किमपि लेखितुं लेखनीयं न क्षमते। अवसरेऽवसरे स्वकीयसम्मतिविचारसाहायकं वितीर्य सुमहदुपकुर्वतां निर्व्याजस्नेहशालिनां सुहृद्वरश्रीहोशिङ्गजगन्नाथ शास्त्रिणामुपकाराणामानृण्यमर्जयितुमपारयन् धन्यवादप्रदानपूर्वकमुपकारस्मरणमेव तावत्कर्तुं सन्नद्धो भवामि । एतत्प्रस्तावनालेखनौपयिकीं सामग्रीं पुरस्कृत्य मयि स्वाभाविकं स्नेहभावं प्रदर्शितवतां यथासमयं समुचितविचारसाहाय्यं च विश्राणयतां श्रीवटुकनाथशर्म एम्० ए० महोदयानामुपकारपरम्परा धन्यवादसहस्रेणापि न समीकर्तुं शक्येति तदुपकृतयो हृदये सङ्गृहीताः।

पुस्तकप्रदानेन समुचितपरामर्शप्रदर्शनेन च खिस्तेश्रीनारायणशास्त्रिभिर्मयि निस्तुलां स्नेहदृष्टिं वितरद्भिरत्र विषये सुमहत्साहाय्यमाचरितमिति तेषामुपकारान् स्मारं स्मारं सहर्षमाचरामि समुचितमेवाभिनन्दनम् । श्रीमद्भिः धर्माधिकारिभिः वरकलशास्त्रिभिश्च पुस्तकप्रदानसूचनाभ्यां सुबहूपकृतमिति तयोरुभयोर्निरुपधिप्रेमभावं प्रकाशितवतोरुपकाराः कथमिव न संस्मरणगोचरतां व्रजेयुः ।

अन्ते च दुर्लभानामुपयुक्तानामप्रकाशितानां च ग्रन्थानां प्रकाशनेन सर्वदा सुरसरस्वतीसेवां विधाय संस्कृतवाङ्मयप्रचारं चिकीर्षतां मुद्रणालयस्वामिनां श्रेष्ठिवरश्रीजयकृष्णदासगुप्तमहोदयानामुद्योगमिमं सुबहु प्रशस्य, इत्थमत्र सङ्गृहीतेष्वपि समुचितेषु पाठेषु सावधानं कृतेऽपि संशोधने दृष्टिदोषेण ग्रन्थेऽस्मिन्संभाविता अशुद्धीः शुद्धिपत्रात्संशोध्य विद्वांसोऽलङ्कारशेखरमालोकयिष्यन्तीति दृढं विश्वस्य, सर्वान्तर्यामिणः श्रीपरमेश्वरस्य कृपयानिर्विघ्नं कार्यमिदं पूरयन् लेखादतो विरमामीत्यलं पल्लवितेन ।

काशी अनन्तरामशास्त्री वेतालः ।

# अलङ्कारशेखरे प्रमाणत्वेनोपन्यस्तानां ग्रन्थानां ग्रन्थकाराणां च वर्णक्रमेण

# सूचीपत्रम् ।


| | |
|---|---|
| अलङ्कारसर्वस्वम् | १०, ३९ |
| कविकल्पलताकारः | ५१ |
| कादम्बरी | ९१ |
| कालिदासः | ८८ |
| काव्यरत्नम् | १३, ७९ |
| कुमारसम्भवम् | ८८ |
| गोवर्धनः | १८, ३१, ३९ ४५, ५२ |
| दण्डी | ६, १४, २५, ३४५८ |
| नैषधम् | ४९ |
| भरतः | २८ |
| भार्गवसर्वस्वम् | २५ |
| भोजराजः | ८ |
| महर्षिः | ५३ |
| महिमभट्टः | ८९ |
| माघः | २९, ४५, ४९ |
| रघुवंशम् | ५५ |
| राजशेखरः | ३४, ७३ |
| व्यक्तिविवेकः | ८९ |
| शौद्धोदनिः | २, ९२ |
| श्रीपादः | ४, ५, ७, २१, २४, २८, ३४, ५१, ७१, ७२, ९० |
| श्रीहर्षः | ४४ |
| श्रुतबोधः | ५५ |


इति ।



॥ श्रीः ॥

# अलङ्कारशेखरस्य विषयानुक्रमणिका ।


| विषयाः | पृष्ठाङ्काः |
|---|---|
| प्रथमं रत्नम् . | १—१३ |
| प्रथममरीचिः | १—६ |
| शिष्टाचारानुगतं नमस्कारात्मकमादौ मङ्गलपद्यद्वयम् | १ |
| ग्रन्थनिर्माणकारणप्रस्तावः | ,, |
| ग्रन्थकारयितुर्वंशवर्णनम् | १—२ |
| सज्जनस्तुतिः, दुर्जननिन्दा च | २ |
| काव्यस्वरूपनिरूपणम् | ,, |
| कारिकाकर्तुः काव्यप्रकाशकारादीनां च मतेन काव्यलक्षणं निरूप्य पदावल्यां काव्यत्वं प्रतिपादयतां केषांचिन्मतं खण्डयित्वा विशिष्टस्य तस्य कीर्त्यादिफलसाधनत्वप्रतिपादनम् | ३ |
| गुणादिविशिष्टस्य कीर्तिप्रीतिप्रयोजकत्वं प्रतिपाद्य शब्दार्थद्वयनिपुणस्य सकवेः सत्काव्यस्य च प्रशंसापूर्वकं प्रवृत्त्यौपयिकलाभपूजादिकाव्यफलनिरूपणम् | ४ |
| प्रतिभादीनां काव्यकारणत्वं श्रीमन्मटभट्टश्रीपादयोरभिमतं निरूप्य मनःप्रसादादीनां कोशादिपरिज्ञानस्य च काव्येऽवश्यापेक्षणीयत्ववर्णनम् | ४—५ |
| संस्कृतप्राकृतपैशाचीमागधीभेदेन संक्षेपतो भारत्याश्चतुर्विधत्वं देवकिन्नरपिशाचहीनजातीयानां क्रमेण संस्कृतादिभाषाभाषित्वं च प्रतिपाद्य संस्कृतस्य सर्वापेक्षया मूर्धन्यत्वनिरूपणम् | ५ |
| गद्यपद्यमिश्रात्मना संस्कृतस्य सलक्षणं त्रैविध्यं निगद्य समवैषम्यभेदेन तदानन्त्यप्रतिपादनम् | ६ |
| दण्डिमतेन वाङ्मयस्य संस्कृतप्राकृताऽपभ्रंशमिश्ररूपेण सलक्षणोपन्यासं चातुर्विध्यं प्रदर्श्य यथाप्रसङ्गं तत्प्रयोगोपपादनम् | ,, |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| द्वितीयमरीचिः | ६—१० |
| 'रीत्युक्तिमुद्रावृत्तीनां जीवितत्वं, दोषाणां त्याज्यत्वं, गुणानां श्लाघ्यत्वम्, अलङ्काराणां शोभार्थत्वं, रसस्यात्मत्वं, रसदोषाभावानुकूलवर्णादीनां च मनस्त्व'मिति शरीरतुल्यस्य काव्यस्य रूपान्तरवर्णनम् | ६ |
| सलक्षणोदाहरणोपन्यासं गौडीवैदर्भीमागधीरूपेण रीतेस्त्रैविध्यं गौडीयादिभिः स्वभावतस्तत्सेव्यत्वं च प्रदर्श्य तस्या बहुविधत्वोक्तिः | ७ |
| वैदर्भीमागधीगौडीनां भोजराजमतेन यथासंख्यमुत्तममध्यमाधमत्ववर्णनम् | ८ |
| उदाहरणमुखेन लोकच्छेकार्भकोन्मत्तभेदादुक्तेश्चतुर्विधत्वोपपादनम् | ९—१० |
| 'एतत्प्रयोजनादिकमलङ्कारसर्वस्वे निरूपित'मिति ग्रन्थकर्तुः प्रतिज्ञा | १० |
| तृतीयमरीचिः | १०—१३ |
| शक्तिलक्षणाव्यञ्जनारूपेण पदवृत्तेस्त्रैविध्यम् | १० |
| शक्तेर्लक्षणमुक्त्वा कोशव्याकरणादीनां तद्बोधौपयिकत्वकथनम् | ,, |
| लक्षणाया लक्षणं निरूप्य तात्पर्यानुपपत्तेर्मुख्यार्थानुपपत्तेर्वा तद्बीजत्वं प्रदर्श्य तदुदाहरणम् | ,, |
| तृतीयस्या वृत्तेर्व्यञ्जनाया उदाहरणम् | ,, |
| प्रकरणादिसहकारिभेदात् पदानां तत्तद्विचित्रार्थोपस्थापकत्वम् | ११ |
| तत्तदुदाहरणोपन्यासपूर्वं पदानामेकदेशाद्यचरमादिबोधकतारूपेण विचित्रस्वभावत्वप्रतिपादनम् | ,, |
| व्यञ्जनायाः शक्यलक्ष्यव्यङ्ग्यात्मकत्रिविधार्थवृत्तित्वप्रदर्शनम् | १२ |
| शक्यार्थस्य व्यञ्जकताया उदाहरणम् | ,, |
| लक्ष्यार्थस्य ,, ,, | ,, |
| व्यङ्ग्यार्थस्य ,, ,, | ,, |

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| उत्तमादिलक्षणनिरूपणपुरःसरं त्रिविधस्याप्युत्तममध्यमाधमात्मकस्य काव्यस्योदाहरणानि | १२—१३ |
| उदाहरणप्रदर्शनमुखेन तत्र प्रतिपाद्यस्यार्थस्य व्यञ्जनामन्तरेण प्रकारान्तरेणाऽप्रतीतेस्तदर्थं व्यञ्जनावृत्तेरावश्यकत्वसमर्थनम् | १३ |
| **द्वितीयं रत्नम्** | १३—२० |
| प्रथममरीचिः | १३—१५ |
| दोषाणां हेयत्वौचित्यं प्रदर्श्य तत्र दण्डिनो वचनं प्रमाणतयोपन्यस्य दोषसामान्यलक्षणकथनमुखेन वक्ष्यमाणपददोषाणामष्टविधत्वोक्तिः | १४ |
| कष्टस्य सलक्षणमुदाहरणम् | ,, |
| अप्रयुक्तस्य ,, | ,, |
| सन्दिग्धस्य ,, | ,, |
| व्यर्थस्य ,, | १५ |
| अश्लीलस्य लक्षणोदाहरणे प्रदर्श्य अमङ्गलव्रीडाजुगुप्साभेदैस्तस्य त्रैविध्यकथनम् | ,, |
| अप्रतीतस्य सलक्षणमुदाहरणम् | ,, |
| असाधुलक्षणं सोदाहरणम् | ,, |
| अवाचक ,, ,, | ,, |
| ग्राम्यस्य अवाचकाश्लीलाऽन्यतरान्तर्भावः | ,, |
| द्वितीयमरीचिः | १६—१८ |
| वक्ष्यमाणवाक्यदोषाणां द्वादशविधत्वम् | १६ |
| न्यूनं सलक्षणोदाहरणम् | ,, |
| भेदप्रदर्शनपूर्वकं विसन्धिलक्षणं सोदाहरणम् | ,, |
| व्याकीर्णं सलक्षणोदाहरणम् | १७ |
| समाप्तपुनरात्तं ,, | ,, |
| भग्नक्रमं ,, | ,, |
| भग्नयति ,, | ,, |
| भग्नच्छन्दः ,, | ,, |
| वाक्यगर्भं ,, | १७—१८ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| अरीतिमत् ,, | १८ |
| अविमृष्टविधेयांशं ,, | ,, |
| समुदायार्थवर्जितं ,, | ,, |
| विरुद्धमतिकृत् ,, | ,, |
| गोवर्धनमतेन असमर्थसमासस्यापि दोषान्तरत्वमुक्त्वा तदुदाहरणम् | ,, |
| तृतीयमरीचिः | १९—२० |
| अर्थदोषाणां वक्ष्यमाणानामष्टविधत्वम् | १९ |
| विरसस्य लक्षणमुदाहरणं च | ,, |
| ग्राम्यस्य ,, ,, | ,, |
| व्याहतस्य ,, ,, | ,, |
| खिन्नस्य ( अपुष्टस्य ) ,, | ,, |
| हीनोपमस्य ,, ,, | ,, |
| अधिकोपमस्य ,, ,, | ,, |
| असदृशोपमस्य ,, ,, | ,, |
| 'देशादिविरोधि'लक्षणमुदाहरणे सङ्गमय्य तत्तच्छास्त्रादि-भेदेन तदानन्त्यप्रतिपादनम् | २० |
| लोककविप्रसिद्ध्योर्विरोधे कविप्रसिद्धेर्बलीयस्त्वनिदर्शनम् | ,, |
| शङ्कासमाधिभ्यां दोषाणां दोषत्वं संसाध्य दोषलक्ष-णनिष्कर्षोक्तिः | ,, |
| 'विदुषामनुद्वेगकारि काव्यं कर्तव्य'मिति सम्प्रदायानुरो-धेन व्याख्यां कुर्वतो ग्रन्थकर्तुर्वचनम् | ,, |
| तृतीयं रत्नम् । | २१-२८ |
| प्रथममरीचिः | २१—२२ |
| अलङ्कारैरलङ्कृतेऽपि काव्ये गुणस्य अत्यन्तावश्यकत्व-समर्थनम् | २१ |
| श्रीपादमतेन शब्दार्थयोः काव्यशरीरत्वं रसस्य च का-व्यात्मरूपत्वं निरूप्य गुणदोषालङ्काराणां क्रमेण शौर्यका-णत्वकुण्डलादिसादृश्यकथनम् | ,, |
| शब्दार्थनिष्ठत्वेन गुणस्य सामान्यतो द्वैविध्यं वैशेषिकगु- | |

| विषयाः | | | पृष्ठाङ्काः |
|---|---|---|---|
| णस्वरूपं च दर्शयित्वा शब्दगुणानां पञ्चविधत्वोक्तिपुरस्कारेण तत्रैवेतरसमावेशकथनम् | | | २१ |
| संक्षिप्तत्वस्य सलक्षणमुदाहरणम् | | | ,, |
| उदात्तत्वस्य | ,, | | २१—२२ |
| प्रसादस्य | ,, | | २२ |
| उक्तेः | ,, | | ,, |
| समाधेः | ,, | | ,, |
| द्वितीयमरीचिः | | | २२—२३ |
| वक्ष्यमाणान् चतुरोऽर्थगुणान् निरुच्य परेषामत्रैवान्तर्भावसूचनम् | | | २२ |
| भावकत्वं सलक्षणोदाहरणम् | | | २३ |
| सुशब्दत्वं | ,, | | ,, |
| पर्यायोक्तेः | ,, | | ,, |
| सुधर्मितायाः | ,, | | ,, |
| तृतीयमरीचिः | | | २४—२८ |
| स्वमतेन परमतेन च वैशेषिकगुणलक्षणं निर्दिश्य 'रसप्रतिबन्धाभावे दोषाभावत्वमुचितमेवे'ति श्रीपादमतं प्रतिपाद्य पदेषु यथासम्भवं दोषाभावत्वकथनम् | | | २४ |
| कष्टस्य अनुप्रासेषु | अदोषत्वं | सोदाहरणम् | ,, |
| अप्रयुक्तस्य श्लेषादौ | ,, | ,, | ,, |
| सन्दिग्धस्य व्याजस्तुतौ | ,, | ,, | २४—२५ |
| व्यर्थस्य यमकादौ | ,, | ,, | २४ |
| अश्लीलस्य भगवत्यादौ | ,, | ,, | ,, |
| अप्रतीतस्य तद्वेदितरि | ,, | ,, | ,, |
| असाधुत्वस्य अनुकृतौ | ,, | ,, | २५—२६ |
| अवाचकस्य लक्षणादौ | ,, | ,, | २६ |
| न्यूनस्य प्रतीतेरबाधात् | ,, | ,, | ,, |
| विसन्धेः पादभेदे | ,, | ,, | ,, |
| व्याकीर्णस्य सापेक्षे | ,, | ,, | २७ |
| समासपुनरात्तस्य वाक्यभेदे | ,, | ,, | ,, |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| यतिभङ्गस्य समस्ते पदे अदोषत्वं सोदाहरणम् | २७ |
| निरर्थकस्य बालादौ ,, ,, | ,, |
| विरुद्धस्य तथात्वाभिप्रायेण प्रयोगे ,, ,, | २८ |
| विरसस्य अप्रधाने ,, ,, | ,, |
| ग्राम्यस्य द्व्यर्थस्य नर्मविषये ,, ,, | ,, |
| रसहानिकरत्वाभावादेतेषामदोषत्वं प्रतिष्ठाप्य सर्वसामान्याऽदोषत्वकथनम् | ,, |
| श्रीपादमतेन पुनरुक्तस्य तदर्थातिशयादिषु दोषाभावत्वम् | ,, |
| चतुर्थं रत्नम् | २९–३९ |
| प्रथममरीचिः | २९–३१ |
| अलङ्कारस्य शोभार्थत्वे युक्तिं दर्शयित्वा 'चमत्कारविशेषकारित्वं' 'परम्परया रसोपकारित्वं' चेति स्वकीयपरकीयाऽलङ्कारसामान्यलक्षणे निर्दिश्य शब्दालङ्काराणामष्टविधत्वेन विभजनम् | २९ |
| खड्गचक्रादिभेदादनन्तस्य चित्रस्य लक्षणम् | ,, |
| वक्रोक्तेः लक्षणोदाहरणे | ,, |
| अनुप्रासस्य ,, प्रदर्श्य द्वैविध्यकथनम् | ३० |
| गूढस्य ,, ,, क्रियाकारकादिभेदादनेकविधत्वप्रतिपादनम् | ,, |
| श्लेषस्य ,, ,, विभक्तिपदवर्णादिभेदादष्टविधत्वोक्तिः | ,, |
| प्रहेलिकायाः ,, ,, च्युताक्षरादिभेदैः षड्विधत्वनिरूपणम् | ३०–३१ |
| प्रश्नोत्तरस्य बहिरन्तर्भेदेन द्वैविध्यं कथयित्वा तदुदाहरणे | ३१ |
| यमकस्य लक्षणमुदाहरणं च प्रदर्श्य संक्षेपतः सप्ताशीतिप्रकारत्वप्रतिपादनम् | ,, |
| गोवर्धनमतेन यमकस्य चित्रात्मकत्वम् | ,, |
| द्वितीयमरीचिः | ३२–३४ |
| अर्थालङ्काराणां चतुर्दशविधत्वम् | ३२ |
| उपमायास्तत्प्रसङ्गादुपमानोपमेययोश्च लक्षणान्युक्त्वा | |

| विषयाः | | पृष्ठाङ्काः |
|---|---|---|
| तस्या दशधात्वकथनम् | | ३२ |
| द्विविधाया वाक्यार्थोपमायाः सलक्षणमुदाहरणम् | | ,, |
| अतिशयोपमायाः | ,, | ,, |
| श्लेषोपमायाः | ,, | ,, |
| निन्दोपमायाः | ,, | ३२—३३ |
| भूतोपमायाः | ,, | ३३ |
| विपर्ययोपमायाः | ,, | ,, |
| संशयोपमायाः | ,, | ,, |
| नियमोपमायाः | ,, | ,, |
| स्त्र्योपमायाः | ,, | ,, |
| त्रिक्रियोपमायाः | ,, | ,, |
| श्रीपादसम्मतायाः समभिव्याहारोपमाया उदाहरणम् | | ३४ |
| सर्वत्रोपमासु साम्यस्य न्यूनाधिकत्वयोः सत्त्वेऽपि काव्यमहिम्ना तत्र साम्यप्रतीतेर्निर्बाधत्वम् | | |
| 'समानाधिकन्यूनसजातीयविरोधिसकुल्यसोदरकल्पादीनां सर्वेषां साम्यवाचकत्व'मिति राजशेखरमतप्रदर्शनम् | | ,, |
| 'अलङ्कारमूर्धन्यायिता काव्यसम्पत्सर्वस्वरूपा उपमा कविकुलस्य जनन्येवे'ति ग्रन्थकारमतोद्घाटनम् | | ,, |
| तृतीयमरीचिः | | ३४—३६ |
| भेदप्रत्ययतिरोधानपूर्वकाऽभेदप्रत्ययरूपे स्वाभिमते रूपकलक्षणे दण्डिवचनं प्रमाणत्वेनोपकल्प्य रूपकस्य संक्षेपतः पञ्चविधत्वनिर्देशः | | ३४—३५ |
| विरुद्धस्य | लक्षणमुदाहरणं च | ३५ |
| समस्तस्य | उदाहरणम् | ,, |
| व्यस्तस्य | ,, | ,, |
| रूपकरूपकस्य | ,, | ,, |
| श्लिष्टरूपकस्य सोदाहरणस्य समस्तासमस्तादिभेदादसंख्यत्वं निरूप्य तत्र लक्षणाया अन्तर्भावकथनपूर्वकं | | |

विषयाः पृष्ठाङ्काः

द्वैविध्यप्रतिपादनमुखेन तदुदाहरणोपन्यसनम् ३५—३६

चतुर्थमरीचिः ३६--३९

लक्षणोदाहरणोपन्यासपुरःसरमुत्प्रेक्षायाः सर्वालङ्कार-सर्वस्वभूतायाश्चेतोहरत्वं व्याहृत्य उत्प्रेक्षाव्यञ्जकानां पदानां परिगणनम् ३६

समासोक्तेः लक्षणोदाहरणे ,,

अपह्नुतेः ,, ,,

समाहितस्य ,, ३७

स्वभावस्य ,, ,,

द्विविधस्य विरोधस्य ,, ,,

सारस्य ,, ,,

दीपकस्य लक्षणलक्षितस्य भिन्नाऽभिन्नत्वरूपेण भेद-द्वयं तदुहारणं च निर्दिश्य मालादीपकादिभेदेन तस्याऽगणनीयत्ववर्णनम् ,,

मालादीपकस्य द्विविधस्य लक्षणोदाहरणे ३८

सहोक्तेर्द्विविधत्वमुक्त्वा तल्लक्षणोदाहरणोपन्यासः ,,

अन्यदेशत्वस्य लक्षणमुदाहरणं च ,,

विशेषोक्तेः ,, ,, ३८—३९

विभावनायाः ,, ,, ३९

अन्यदेशत्वविशेषोक्तिविभावनानामेकतरस्वीकारेण त-दितरान्यथासिद्धिरिति तेषां तेषां मतान्युपन्यस्य व्यतिरेकालङ्कारस्यातिरिक्तत्वमेकेषां मतेन सोदाहरणं निर्दिश्य आक्षेपलक्षणनिरूपणपूर्वकं तत्पार्थक्यस्योदा-हरणेन स्पष्टीकरणम् ,,

'बालानां सुखबोधार्थं प्रदर्शितानां संक्षेपतोऽलङ्काराणां परस्परं भेदस्तदितरेषामभावश्च सप्रपञ्चमलङ्कारस-र्वस्वे दर्शित' इति ग्रन्थकारस्योक्तिः। ,,

पञ्चमं रत्नम्। ४०—५८

प्रथममरीचिः ४०—५२

उपमायाः सादृश्यात्मकत्वमुक्त्वा तत्प्रतियोग्यनुयोगि-

| विषयाः | | | पृष्ठाङ्काः |
|---|---|---|---|
| नोर्नि रूपणम् | | | ४० |
| चन्द्रकलादिभिर्योषिद्वर्णनीयेत्युदाहरणाभ्यां स्फुटीकृत्य तस्या अत्यन्तानन्दसन्दोहदायिनीत्वरूपेण वर्णनीयत्व-मुक्त्वा तदुदाहरणप्रदर्शनम् | | | ४०—४१ |
| योषितः शरीरोपमानानां | सोदाहरणं | निरूपणम् | ४१ |
| " केशोपमानानां | " | " | ४१—४२ |
| " ललाटोपमानयोः | " | " | ४२ |
| " भ्रूपमानानां | " | " | " |
| " कपोलोपमानानां | " | " | " |
| " मुखोपमानानां | " | " | " |
| " नासिकोपमानानां | " | " | ४२—४४ |
| " कण्ठोपमानानां | " | " | ४४ |
| " नेत्रोपमानानां | " | " | ४४—४५ |
| " अधरोष्ठोपमानानां | " | " | ४५ |
| " दन्तोपमानानां | " | " | ४५—४६ |
| " वाणीतन्माधुर्योपमानानां | " | " | ४६ |
| " बाहूपमानानां | " | " | " |
| " करोपमानानां | " | " | ४६—४७ |
| " नखोपमानानां | " | " | ४७ |
| " स्तनोपमानानां | " | " | ४७—४८ |
| " रोमाल्युपमानानां | " | " | ४८ |
| " नाभ्युपमानानां | " | " | " |
| " वल्युपमानानां | " | " | " |
| " पृष्ठोपमानानां | " | " | ४८—४९ |
| " मध्योपमानानां | " | " | ४९ |
| " जघनोपमानस्य | " | " | " |
| " नितम्बोपमानानां | " | " | " |
| " ऊरूपमानानां | " | " | " |
| " चरणोपमानानां | " | " | ५० |
| " अङ्गुष्ठनखोपमानस्य | " | " | " |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| योषितः गमनोपमानस्य सोदाहरणं निरूपणम् | ५० |
| ,, कटाक्षोपमानानां ,, ,, | ,, |
| ,, हासोपमानानां ,, ,, | ५०—५१ |
| ,, दर्शनोपमानस्य ,, ,, | ५१ |
| ,, श्वासवर्णनप्रकारस्य ,, ,, | ,, |
| ,, नूपुरध्वनिवर्णनप्रकारस्य ,, ,, | ,, |
| श्रीपादानुसारिकविकल्पलताकारमतेन नारीणां वेणीधम्मिल्लसीमन्तभ्रूदन्तदृष्टिजिह्वानासिकाबाहुद्वयाङ्गुलिनखनाभित्रिवलीनां तानि तान्युपमानानि सङ्गृह्य पुरुषाणां स्कन्धभुजगमनसादृश्यवर्णनम् | ,, |
| गोवर्धनमतानुसारेण सौन्दर्यादीन् शरीरगुणान् वर्णयित्वा केशकपोलकण्ठनेत्राधरदन्तवाणीभुजकरस्तनरोमालिजङ्घानिश्वासानां वर्णनप्रकारप्रदर्शनम् | ५२ |
| मृदुवर्त्मना संक्षेपतः सर्वाविरोधेन निरूपितस्य योषिद्वर्णनप्रकारस्योपसंहारः | ,, |
| द्वितीयमरीचिः | ५३—५५ |
| अतिपुष्टत्वोच्चत्वविशालबाहुत्वरूपेण पुरुषा वर्णनीयाः | ५३ |
| पुरुषाणां सोदाहरणं बाहूपमानप्रदर्शनम् | ,, |
| ,, ,, वक्षोवर्णनप्रकारः | ,, |
| ,, ,, भुज ,, | ,, |
| ,, ,, मध्य ,, | ५३—५४ |
| ,, ,, चरण ,, | ५४ |
| ,, हृदि नारीस्तनयोरिवाऽतिस्वच्छत्वमभिधाय तदुदाहरणम् | ,, |
| नारीवत्सर्वं कान्तिप्रयोजकं पुरुषेष्वपि वर्णनीयमित्युक्त्वा तदुदाहरणानि | ५४—५५ |
| पूर्वोक्तवर्णनप्रकारस्योपलक्षणरूपत्वं निगद्य प्रकारान्तरेण सोदाहरणं तद्वर्णनम् | ५५ |
| प्रतापकीर्त्योः अग्न्यादिचन्द्राद्यात्मना वर्णनीयत्वं निर्दिश्य करचरणभुजवर्णनविषयनिरूपणपूर्वकं सोदाहरणोप- | |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| न्यासं गमनसादृश्यप्रतियोगिप्रतिपादनम् | ५५ |
| व्याघ्रपुङ्गवादीनामुत्तरपदस्थानां प्रशस्तार्थवाचकत्वं निगद्य शिष्टप्रयोगानुसारेण सामुद्रिकाद्यविरोधेन सर्वमुभयोर्वर्णनीयमिति सूचनम् | ,, |
| तृतीयमरीचिः | ५६—५८ |
| इवाद्यैः सादृश्यप्रतिपत्तिः | ५६ |
| प्रतिमानाद्यैः ,, | ,, |
| समानाद्यैर्निभादिभिः ,, | ,, |
| बन्धुचौरशत्रुवंशाद्यैः ,, | ५६—५७ |
| भृतकाद्यैः ,, | ५७ |
| भृत्याद्यैः ,, | ,, |
| न्यक्कारार्थक्रियापदैः सादृश्यवर्णनप्रकारोपदर्शनम् | ,, |
| सन्देहतत्त्वद्वाक्यादिभिः ,, | ५७—५८, |
| प्रतिच्छन्दसरूपादीनां सादृश्यप्रतिपादकानां शब्दानां दण्डिमतमवलम्ब्य सङ्ग्रहः | ५८ |
| 'लोकविलक्षणा कवीनां घटना जगत् कर्तुमकर्तुमन्यथा कर्तुं समर्थे'ति ग्रन्थकर्तुः प्रतिज्ञा | ,, |


## षष्ठं रत्नम् . ५९-६८


| | |
|---|---|
| प्रथममरीचिः | ५९—६१ |
| कविसम्प्रदायस्य सर्वाभ्यर्हितत्वप्रदर्शनपूर्वकमसतोऽपि निबन्धनेन सतोऽप्यनिबन्धनेन नियमस्य पुरस्कारेण च तस्य त्रैविध्यनिरूपणम् | ५९ |
| कविसम्प्रदायोक्तभेदत्रयस्य वर्णनप्रकाराः | ,, |
| कविसम्प्रदायसिद्धानां वर्णनीयानामनेकेषां विषयाणां सप्रपञ्चं प्रकारान्तरैरपि प्रतिपादनम् | ६०—६१ |
| द्वितीयमरीचिः | ६१—६७ |
| राजादीनां वर्णनीयानां सङ्ग्रहः | ६१ |
| राज्ञि कीर्तिप्रतापादीनां वर्णनीयत्वकथनम् | ६१—६२ |
| देव्यां सौभाग्यलावण्यादीनां ,, | ६२ |

| विषयाः | | पृष्ठाङ्काः |
|---|---|---|
| देशे बहुखनिद्रव्यादीनां वर्णनीयत्वकथनम् | | ६२ |
| ग्रामे धान्यलतावृक्षादीनां | ,, | ,, |
| नगरे अट्टपरिखावप्रादीनां | ,, | ,, |
| सरिति समुद्रगामित्वतरङ्गादीनां | ,, | ,, |
| सरसि अम्बुलहरीजलगजादीनां | ,, | ,, |
| समुद्रे द्वीपाद्रिरत्नादीनां | ,, | ,, |
| वने सर्पवराहगजयूथादीनां | ,, | ,, |
| उद्याने सरणिसर्वफलपुष्पादीनां | ,, | ६२—६३ |
| पर्वते मेघौषध्यादीनां | ,, | ६३ |
| प्रयाणे भेरिनिस्वानभूकम्पादीनां | ,, | ,, |
| युद्धे कवचबलवीरादीनां | ,, | ,, |
| अश्वे वेगितौन्नत्यादीनां | ,, | ,, |
| गजे सहस्रयोधितोच्चतादीनां | ,, | ,, |
| सूर्ये अरुणतादीनां | ,, | ,, |
| चन्द्रे कुलटाचक्रवाकादिपीडादीनां | ,, | ,, |
| वसन्ते दोलाकोकिलमलयानिलादीनां | ,, | ६४ |
| ग्रीष्मे पाटलमल्लीसन्तापादीनां | ,, | ,, |
| वर्षासु मेघमयूरगर्वादीनां | ,, | ,, |
| शरदि चन्द्रसूर्यपटुतादीनां | ,, | ,, |
| हेमन्ते दिवसलघुतादीनां | ,, | ,, |
| शिशिरे कुन्दसमृद्धिकमलम्लानतादीनां | ,, | ,, |
| विवाहे स्नानशुद्धाङ्गभूषादीनां | ,, | ,, |
| स्वयंवरे शचीरक्षादीनां | ,, | ,, |
| मद्यपाने वचनवैकल्यगतिस्खलनादीनां | ,, | ,, |
| पुष्पावचये पुष्पावचयपुष्पार्पणादीनां | ,, | ,, |
| जलक्रीडायां सरोवरक्षोभादीनां | ,, | ६४—६५ |
| सम्भोगे सात्त्विकभावसीत्कारादीनां | ,, | ६५ |
| वियोगे तापनिश्वासचिन्तादीनां | ,, | ,, |
| मृगयायां संचारवागुरादीनां | ,, | ,, |
| आश्रमे अतिथिपूजामृगविश्वासादीनां | ,, | ,, |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| प्रभाते पद्मकोशविकासस्य वर्णनीयत्वकथनम् | ६५ |
| मध्यान्हे सन्तापस्य ,, | ,, |
| सायं सूर्यारुण्यचक्रपद्मादिविप्लवयोर्वर्णनीयत्वमुक्त्वा ऋतुसन्धेर्वयःसन्धेश्च तथात्वकथनम् | ,, |
| अन्धकारे अतिकाठिन्यादीनां वर्णनीयत्वकथनम् | ,, |
| वृक्षे शाखाबाहुल्यादीनां ,, | ,, |
| अभिसरणे निर्भयत्वभूषणराहित्यादीनां ,, | ,, |
| तृतीयमरीचिः | ६५—६७ |
| कविसम्प्रदायसिद्धवक्ष्यमाणनियमान्तरपरिगणनम् | ६५—६६ |
| चन्द्रैरावतादीनां श्वेतत्वेन वर्णनीयत्वाभिधानम् | ६६ |
| कृष्णचन्द्रकलङ्कादीनां नीलत्वेन ,, | ,, |
| क्षात्रधर्मत्रेतारौद्ररसादीनां शोणत्वेन | ,, |
| दीपादीनां पीतत्वेन ,, | ,, |
| रजोलूतादीनां धूसरत्वेन ,, | ६७ |
| सूर्यतुरगादीनां हरितत्वेन वर्णनमुपदिश्य 'द्विरूपतायामप्रसिद्धौ च नियमोऽयमुक्तः, अन्यत्र च स्वरूपेण वर्णनं कार्य'मिति रहस्यप्रकाशनम् | ,, |
| चतुर्थमरीचिः | ६७—६८ |
| 'एकद्व्यादितः सहस्रं यावत् यानि वस्तूनि यत्संख्याकानि, तानि कविप्रयोगानुसारेण तथा विज्ञाय वर्णनीयानी'ति नियमान्तरसङ्ग्रहः | ६७ |
| ऐरावतपक्षकालवेदपाण्डववज्रकोणपातालयोगाङ्गहस्ताङ्गुलिमहादेवसूर्यताम्बूलगुणविद्यातिथिचन्द्रकलादीनां यथाक्रममेकत्वादिषोडशत्वेन, द्वीपविद्यादीनामष्टादशत्वेन, रावणभुजनेत्रादेर्विंशतित्वेन, धार्तराष्ट्रादीनां शतत्वेन, जान्हवीमुखादीनां च सहस्रत्वेन वर्णनौचित्यसूचनम् | ६७—६८ |
| स्फुटत्वादमीषामुदाहरणप्रदर्शनस्यानुपयोगित्वप्रतिपादनम् | ६८ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| सप्तमं रत्नम् . | ६९–७४ |
| प्रथममरीचिः | ६९--७० |
| प्रकारोपदेशगर्भं कविप्रकर्षबीजकथनम् | ६९ |
| गतागतसमत्वस्योदाहरणम् | ,, |
| पुंल्लिङ्गे संस्कृतप्राकृतैकताया उदाहरणम् | ,, |
| स्त्रीलिङ्गे ,, ,, | ,, |
| नपुंसकलिङ्गे ,, ,, | ७० |
| आख्याते ,, ,, | ,, |
| ऐकार्थ्ये बहुवचनैकवचनयोः साम्यस्य ,, | ,, |
| धर्मिधर्माभिधायिनां शब्दानां परिगणनम् | ,, |
| विशेषसामान्यवाचक,भावाभाववाचकशब्दानां सङ्ग्रहः | ,, |
| द्वितीयमरीचिः | ७१—७४ |
| 'दुष्करसमस्यापूरणादिकं शक्तैः कविभिः कर्तुं शक्य'-मिति तत्प्रकारप्रदर्शनम् | ७१ |
| समस्यापूरणप्रकारान्तर्गतस्य प्रश्नोत्तरस्य उदाहरणम् | ,, |
| ,, पदभङ्गस्य ,, | ,, |
| ,, पूर्वस्मिन्नाद्ययोजनस्य ,, | ,, |
| अवान्तरप्रकारं प्रकारान्तरं श्रीपादसंमतं च प्रकारं प्रदर्श्य तद्विशेषप्रदर्शनम् | ७२ |
| कासांचन समस्यानां नानाभुवनसम्बन्धित्वेन तत्प्रकारानुपदर्श्य श्रीकृष्णोदरे सर्वसंसर्गस्य सार्वकालिकत्वमुक्त्वा अगस्त्यसमुद्रपानादिपौराणिककथाभिः शिवादिदेवसंचारैः सादृश्यैश्च सर्ववर्णनसम्भवप्रतिपादनम् | ७२—७३ |
| श्रीपादस्य वृद्धानां च संमतं समस्यापूरणप्रकारं निर्दिश्य तार्किकोक्तविशेषानिरूपणम् | ७३—७४ |
| अपरिकलितकाव्यमार्गमीश्वरं वशीकर्तुमिच्छता कविना समाश्रयणीयं प्रकारं निरूप्य 'शिशूनां कृते दिग्दर्शनमिदम्, समर्थानां तु कियानत्रार्थे परिश्रम' इति ग्रन्थकारोक्तस्तत्प्रकारोपसंहारः | ७४ |

विषयाः पृष्ठाङ्काः

## अष्टमं रत्नम्. ७५-९३


प्रथममरीचिः ७५—८५

रसस्य काव्यात्मरूपत्वेन, तं विना काव्यस्य अनास्वाद्यत्वं निगद्य रसलक्षणकथनम् ७५

'कारणकार्यसहकारिभिरभिव्यक्तः स्थायिभावो रस' इति केषाञ्चिन्मतेन रसस्वरूपं निरूप्य कार्यरूपाणामष्टविधसात्त्विकभावानां निर्देशः ,,

शृङ्गारादिभेदेन रसस्य नवविधत्वप्रतिपादनपुरःसरं सम्भोगविप्रलम्भात्मना शृङ्गारद्वैविध्यकथनम् ७५—७६

सम्भोगस्य लक्षणं निर्दिश्य नायिकाश्रयत्वेन नायकाश्रयत्वेन च तद्भेदद्वयप्रदर्शनम् ७६

नायिकाश्रयसम्भोगस्योदाहरणम् ,,

अनूढास्वकीयापरकीयापणाङ्गनेति चतुर्णां नायिकाभेदानां लक्षणानि ,,

चतसृणामपि नायिकानां खण्डितोत्कण्ठिताप्रोष्यत्पतिकाऽभिसारिकाकलहान्तरितावासकसज्जाविप्रलब्धास्वाधीनभर्तृकेति रूपेण पुनर्भेदाष्टकनिरूपणम् ,,

नायकाश्रयसम्भोगस्योदाहरणम् ७७

नायकस्य लक्षणं बहुप्रकारस्यापि तस्य अनुकूलदक्षिणशठधृष्टात्मना संक्षेपतश्चतुर्विधत्वं च प्रतिपाद्य अनुकूलादीनां लक्षणानि ,,

लक्षणलक्षितस्य विप्रलम्भस्य पूर्वानुरागमानप्रवासकरुणात्मकत्वेन चातुर्विध्यम्

पूर्वानुरागस्य लक्षणोदाहरणे ७७—७८

मानस्य ,, ७८

प्रवासस्य ,, ,,

करुणस्य ,, ,,

रतिप्रकृतिकस्य शृङ्गारस्य भेदरूपत्वं विप्रलम्भे समर्थ्य रतेर्देवादिवृत्तित्वं श्रीपादाभिमतं प्रतिपाद्य कान्ताविषयायास्तस्याः शृङ्गारत्वेन निरूपणम् ७८—७९

| विषयाः | पृष्ठाङ्काः |
|---|---|
| देवविषयाया रतेरुदाहरणम् | ७९ |
| मुनि ,, ,, | ,, |
| पुत्र ,, ,, | ,, |
| नृप ,, ,, | ,, |
| गुरु ,, ,, | ,, |
| हास्यरसस्य लक्षणमुदाहरणं च | ८० |
| शोक ,, ,, ,, | ,, |
| रौद्र ,, ,, ,, | ,, |
| वीर ,, ,, ,, | ८०—८१ |
| भयानक ,, ,, ,, | ८१ |
| बीभत्स ,, ,, ,, | ,, |
| अद्भुत ,, ,, ,, | ८१—८२ |
| शान्त ,, ,, ,, | ८२ |
| रसानां अविरोधविरोधयोः प्रदर्शनम् | ८२—८३ |
| रत्यादिनिर्वेदान्तानां नवानां स्थायिभावानां सङ्ग्रहः | ८३ |
| निर्वेदस्य स्थायित्वसमर्थनपूर्वकं स्थायिनो लक्षणम् | ,, |
| रत्यादीनां विशेषलक्षणानि निर्दिश्य सोदाहरणं तेषां सर्वभावेषु मुख्यत्वनिरूपणम् | ८३ |
| उद्दीपनाऽऽलम्बनात्मना द्विविधस्य विभावस्य विषयप्रदर्शनम् | ,, |
| अनुभावस्य लक्षणमुक्त्वा तत्र हेलाविच्छित्त्यादीनां शृङ्गारभावजानां चेष्टानां प्रतिपादनम् | ८४ |
| सात्त्विकभावस्य लक्षणम् | ,, |
| व्यभिचारिलक्षणमुक्त्वा तस्य निर्वेदादिविभागप्रदर्शनम् | ८४—८५ |
| निर्वेदादीनां प्रत्येकं भाव्यत्वं कथयित्वा क्वचिद्द्विद्यमानाया भावशबलतायाः ससमन्वयमुदाहरणम् | ८५ |
| द्वितीयमरीचिः | ८५—८९ |
| रसदोषाणां परिगणनम् | ८५ |
| व्यभिचारिणः स्वशब्दोपादानस्य उदाहरणं तत्समन्वयश्च | ८५—८६ |
| ,, ,, प्रत्युदाहरणम् | ८६ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| स्थायिनः स्वशब्दोपादानस्य उदाहरणं तत्समन्वयश्च | ८६ |
| रसस्य ,, ,, ,, | ,, |
| ,, शृङ्गारादिपदप्रतिपादितस्य ,, ,, | ,, |
| अनुभावस्य कष्टप्रकल्पनीयत्वस्य ,, ,, | ८६—८७ |
| विभावस्य ,, ,, ,, | ८७ |
| विभावव्यभिचारिणोः प्रकान्तरसवैरित्वस्य उदा० तत्स० | ८७—८८ |
| व्यक्तिविपर्ययं लक्षयित्वा तत्तल्लक्षणोदाहरणोपन्यासपुरःसरं दिव्यत्वमदिव्यत्वं दिव्यादिव्यत्वं चेति व्यक्तीनां त्रैविध्यप्रतिपादनम् | ८८ |
| दिव्यादीनां चातुर्विध्यमभिधाय चतुर्णामपि तेषामुत्तममध्यमाऽधमादिभेदाद्बहुविधत्वकथनम् | ,, |
| दिव्यादिव्ययोर्वर्णनीयविषयाणां निरूपणम् | ,, |
| 'अनौचिती च रसदोषो महा'निति तस्याः सर्वथा हेयत्वम् | ८८—८९ |
| 'अनौचितीं विहाय रसभङ्गस्य नान्यत्कारण'मिति महिमभट्टमतप्रदर्शनम् | ८९ |
| 'परिगणितेभ्योऽन्येऽपि रसदोषा अनौचित्यमूला भवन्ती'ति रसदोषान्तरस्य वर्णनम् | ,, |
| 'यत्र रसहानिर्नैव सम्भाविनी तत्रैते दोषा अदोषत्वमपि भजन्ती'ति रसदोषोपसंहारः | ,, |
| तृतीयमरीचिः | ८९—९३ |
| तत्र तत्र रसेषु छन्दोरीत्यक्षरादीनां यथोचितमुद्दामत्वहृद्यत्वमध्यमत्वाभिधानम् | ८९ |
| उद्दामहृद्ये छन्दोरीती निर्दिश्य श्रीपादोक्तानामुद्दामानां हृद्यानां चाक्षराणां परिगणनम् | ९० |
| शृङ्गारे हृद्याक्षरोदाहरणम् | ,, |
| 'रचनावृत्तिवर्णा वक्त्राद्यौचित्यात्क्वचिदन्यथापि भवन्ती'ति वर्णनम् | ,, |
| वक्त्रौचित्यस्य उदाहरणे समन्वयः | ९०—९१ |
| वाच्यौचित्यस्य ,, ,, | ९१ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| प्रबन्धौचित्यस्य उदाहरणप्रदर्शनम् | ९१ |
| गृहीतमुक्तकादिसर्वसाधारणदोषान्तरप्रतिपादनम् | ,, |
| गृहीतमुक्तकस्य उदाहरणम् | ,, |
| गृहीतमुक्तकरूपाणां हकारेफचकाराणां विशेषतो दोषास्पदानामुदाहरणम् | ९१ |
| मात्राभेदे गृहीतमुक्तकस्य स्वल्पदोषत्वमुदाहृत्य पदे गुणत्वास्पदस्योदाहरणम् | ,, |
| 'रणयोश्चवर्णस्य च भूयस्त्वं रसहानिकर'मिति सूचनम् | ९२ |
| सन्धौ दोषास्पदानां वर्णानां परिगणनम् | ,, |
| मूलसूत्रकृन्नामग्रहणपूर्वं ग्रन्थोपसंहारः | ,, |
| विषयविभागबोधकानां प्रकरणसंख्यासहितानां सङ्केतानां प्रदर्शनम् | ,, |
| ग्रन्थमिमं द्वेषेण दूषयत्सु ग्रन्थकारवचनोद्गारः | ९३ |
| एतस्या व्याख्यायाः व्याख्यान्तरादुत्कृष्टत्वकथनम् | ,, |
| ग्रन्थकारनाममनिर्देशः, ग्रन्थसमाप्तिश्च | ,, |

इति ।

॥ श्रीः ॥

केशवमिश्रकृतः

# अलङ्कारशेखरः ।

प्राणान् कृशोदरीणां राधानयनान्तसर्वस्वम् ।
तेजस्तमालनीलं शरणागतवज्रपञ्जरं वन्दे ॥
स्वप्रकाशचिदानन्दमयाय परमात्मने ।
अविद्यानिबिडध्वान्तभास्कराय नमोऽन्वहम् ॥

ग्रन्थाः काव्यकृतां हिताय विहिता ये सप्त पूर्वं मया
ते तर्कार्णवसंप्लवव्यसनिभिः शक्याः परं वेदितुम् ।
इत्यालोच्य हृदा मदालसवधूपादारविन्दक्वण-
न्मञ्जीरध्वनिमञ्जुलोऽयमधुना प्रस्तूयते प्रक्रमः ॥

आसीत्प्रत्यर्थिपृथ्वीरमणकमलिनीवृन्दहेमन्तमासः
कीर्तिभ्राजत्सुशर्मान्वयकुमुदवनीयामिनीजीवनाथः ।
राजद्राजन्यराजीमुकुटमणिगणप्रोल्लसत्पादपीठः
प्रोद्यत्साम्राज्यलक्ष्मीशिथिलितनहुषो रामचन्द्रोऽवनीन्द्रः ॥

मित्राणि प्रतिपालयँस्त्रिजगतीं कीर्तीन्दुनाऽऽह्लादयन्
शत्रूणां हृदयं प्रतापदहनै रात्रिंदिवं ज्वालयन् ।
सर्वस्वेन कृतार्थयन् द्विजगणान् देवान् मखैस्तोषय-
न्नेष प्रौढमनाश्चिराय बुभुजे सप्तार्णवां मेदिनीम् ॥

सुत्रामोद्दामदिल्लीपरिवृढविलसत्कात्रिलक्षोणिभर्त्रोः
प्रक्रान्ते प्रौढयुद्धे समदलयदसौ कोटिशो वैरिवीरान् ।

पश्चान्मांसास्थिमेदःकलुषितवसुधां प्रोज्झ्य ताँश्चाकलय्य
द्यां यातान् वैरिवर्गान् दिवमपि सहसा जेतुकामो जगाम ॥
क्षीराम्भोधेः शशीव श्रुतिरिव वदनाद्वेधसो रामचन्द्रा-
दस्मादुद्यत्प्रतापः समजनि सुमना धर्मचन्द्रो नरेन्द्रः ।
यस्याद्यापि प्रसन्नास्मितसुभगमुखाः स्विद्यदश्वत्कपोला
रोमाञ्चस्तम्भभव्यास्त्रिदशयुवतयो हन्त ! गायन्ति कीर्तीः ॥
निष्क्रान्तं सदनादुदैक्षि भगवानम्भोजिनीवल्लभ-
स्ते वाताः परिशीलिताः कमलिनीसौरभ्यमेदस्विनः ।
विश्रान्तं गिरिकाननेषु निविडच्छायेषु भाग्योदया-
दित्थं स्मेरमुखाः स्तुवन्ति विपदं यद्वैरिवामभ्रुवः ॥
प्रत्यर्थिभूपतिपरिग्रहराज्यलक्ष्मी-
धम्मिल्लमाल्यसुरभीकृतपाणिपद्मः ।
तस्मादजायत समस्तगुणाभिरामो
माणिक्यचन्द्र इति राजकचक्रशक्रः ॥
काव्यालङ्कारपारङ्गममतिरखिलक्ष्माभृतां चक्रवर्ती
सर्वेषामस्तु काव्ये मतिरतिनिपुणेत्याशये सन्निवेश्य ।
वेदान्तन्यायविद्यापरिचयचतुरं केशवं सन्नियुज्य
श्रीमन्माणिक्यचन्द्रः क्षितिपतितिलको ग्रन्थमेनं विधत्ते ॥
बहुदोषोऽपि विदोषः क्रियते सुजनेन बाण इव हरिणा ।
गुणवदपि निर्गुणीयति दुर्जनतो सूचिकात इव पुस्तम् ॥
परोद्वेगे परानन्दे खलसज्जनयोर्द्वयोः ।
स्वभाव एव शरणं विषपीयूषयोरिव ॥

अलङ्कारविद्यासूत्रकारो भगवान् शौद्धोदनिः परमकारु-
णिकः स्वशास्त्रे प्रवर्तयिष्यन् प्रथमं काव्यस्वरूपमाह—

काव्यं रसादिमद्वाक्यं श्रुतं सुखविशेषकृत् ॥

आदिपदेनालङ्कारपरिग्रहः । तथाच—तदुभयान्यतरत्त्व वा लक्षणम् । अन्यतरत्वं च तदन्यान्यत्वम् । सुखविशेषसाधनत्वं वा लक्षणम् । समुदायार्थशून्येऽपि तदुभयमस्त्येवेति वृद्धाः । अदृष्टद्वारा तद्धेतुशब्देऽतिव्याप्तेराह—श्रुतमिति । सदिति शेषः । सुखे वैजात्यं सर्वानुभवसिद्धमेव ।

केचित्तु—

तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि ।

इत्याहुः। रसप्रतिपत्ति(१)द्वारा सुखविशेषसाधनं वाक्यं(२) काव्यमित्यपरे। केचित्तु—'पदावली काव्यम्, नतु निर्दोषगुणवदादि । काव्यदोषाणामपरिगणनापत्तेः । नच दोषाभावघटितकाव्यत्वज्ञानार्थमेव प्रतियोगिपरिगणनमिति वाच्यम् । तवैत(३)त्काव्यं दुष्टमित्यनुद्भावनापत्तेः। इदं काव्यमेव नेत्यभिधानस्यैवोचितत्वा'दित्याहुः । तन्न, तवायं हेतुराभास इतिवदुपपत्तेः । व्याप्तिविशिष्टपक्षधर्मस्यैव हेतुत्वात् । नच हेतुत्वेनाऽभिमत इति वाच्यम, तुल्यत्वादिति । वस्तुतस्तु तत्काव्यं पृथगेव, यत्र दोषगुणादिचिन्ता। नहि दुष्टं शरीरं शरीरमेव न भवतीत्यन्ये । कीर्त्यादिरूपफलसाधनता तु विशिष्टस्य ।

यदाह—

साधुशब्दार्थसन्दर्भं गुणालङ्कारभूषितम् ।
स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्तये ॥

आहुश्च—

निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् प्रीतिं कीर्तिं च विन्दति ॥

---

(१) प्रतिपत्तिगुणद्वारा—इति कपुस्तके पाठः ।
(२) वाक्यं—इति कपुस्तके नास्ति ।
(३) नचैतत्—इति खपु० पाठः ।

इति । प्रवृत्त्यौपयिकं फलमाह--

हिताय सुकविः कुर्यात्

सुकवेरेव हितमन्यस्य तु प्रतिकूलं(१) तत् । तदुक्तं च--

गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः ।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥
श्लाघ्यः पामरपरिषदि कविरिति(२) होलाककर्तापि ।
यस्मै स्पृहयति विद्वाँस्तत्काव्यं काव्यमित्याहुः ॥
अर्थैः कृतार्थयन्त्येके घटनापटवः परे ।
उभयत्र प्रवीणा ये त एव कवयो मताः ॥

हितमाह श्रीपादः—

लाभः पूजा ख्यातिर्धर्मः कामश्च मोक्षश्च ।
इष्टानिष्टप्राप्तित्यागौ ज्ञानं फलानि काव्यस्य ॥

इष्टेति गोवृषन्यायात् । आहुश्च—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥

वृद्धास्तु—

श्रोतॄणां द्राङ् महानन्दः स स्वस्मिन्नाभिमानिकः ।
तत्कालफलमेतावत् क्रमात्कीर्तिधनादिकम् ॥

नन्वेवं सर्वः सुकविरेव स्यात्, अत आह—

तद्धेतुः प्रतिभादिकम् ॥ १ ॥

तदाह —

प्रतिभा कारणं तस्य व्युत्पत्तिस्तु विभूषणम् ।
भृशोत्पत्तिकृदभ्यासः काव्यस्यैषा व्यवस्थितिः ॥

---

(१) प्रतिकूलमिति तत्र—इति कपु० पाठः ।

(२) कवयति दोलीककर्तापि--इति क,खपुस्तकयोः पाठः ।

व्युत्पत्तिर्नानातन्त्रज्ञानम् । आहुश्च—

शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे ॥

शक्तिः पुण्यविशेषः । स एव प्रतिभेत्युच्यते ।

व्युत्पत्तिः शक्तिरभ्यासस्त्रितयं काव्यसाधनम् ।

इत्यपि । श्रीपादस्तु—

परिशीलितकाव्यवर्त्मनां कविसंसर्गविशुद्धचेतसाम् ।
परिभावयतामनुक्षणं कविता पाणितले निषीदति ॥

वृद्धास्तु-(१)

नैसर्गिकी च प्रतिभा श्रुतं च बहुनिर्मलम् ।
अमन्दश्चाऽभियोगोऽस्याः कारणं काव्यसंपदः ॥
मनःप्रसत्तिः प्रतिभा प्रातःकालेऽभियोगिता ।
अनेकशास्त्रदर्शित्वमित्यर्था लोकहेतवः ॥
द्वित्रिकोषपरिज्ञानं द्वित्रिव्याकरणज्ञता ।
छन्दोविद्याप्रवीणत्वं काव्येऽवश्यमपेक्ष्यते ॥

आदिपदात्प्रकारपरिज्ञानम् । तथाहि-सा खल्वेषा भारती सुरसरिदिव सहस्रमु(२)ख्यपि संक्षेपेण चतुर्धा प्रवर्तते ।

तदाहुः—

संस्कृतं प्राकृतं चैव पैशाची मागधी तथा ।
विद्याश्चतस्र एवैताः संक्षेपात्काव्यवर्त्मनः ॥
देवाद्याः संस्कृतं प्राहुः प्राकृतं किन्नरादयः ।
पैशाचीं च पिशाचाद्या मागधीं हीनजातयः ॥
चतसृष्वपि मूर्धन्यं संस्कृतं मुनयो विदुः ।

---

(१) वृद्धास्तु-इति कपुस्तके नास्ति ।

(२) मुखापि--इति गपु० पाठः ।

गद्यं पद्यं च मिश्रं च तत्रिधैव व्यवस्थितम् ॥
गद्यमुत्कलिकाप्रायं पद्यगन्धीति च द्विधा ।
तत्रापि पद्यं तदपि वृत्तकं वर्णमात्रयोः ॥
समवैषम्यभेदेन तदानन्त्याय कल्पते ।

दण्डिनस्तु—

तदेतद्वाङ्मयं भूयः संस्कृतं प्राकृतं तथा ।
अपभ्रंशश्च मिश्रं चेत्याहुरार्या(१)श्चतुर्विधम् ॥
प्राकृतं तज्जतत्तुल्यदेश्यादिकमनेकधा ।
अपभ्रंशश्च यच्छुद्धं तत्तद्देशेषु भाषितम् ॥
संस्कृतं सर्गबन्धादि प्राकृतं स्कन्धकादिकम् ।
आसारादि त्वपभ्रंशो नाटकादि तु मिश्रकम् ॥
यथामति यथाशक्ति यथौचित्यं यथारति ।
कवेः पात्रस्य चैतासां प्रयोग उपपद्यते ॥

इत्यलङ्कारशेखरे उपक्रमरत्ने
काव्यस्वरूपफलकारणमरीचिः ।

---

शरीरकल्पस्य काव्यस्य रूपान्तरमाह—

रीतिरुक्तिस्तथा मुद्रा वृत्तिः काव्यस्य जीवितम्(२) ॥
त्रिविधस्यापि दोषास्तु त्याज्याः श्लाघ्या द्वये गुणाः ॥१॥
अलङ्कारस्तु शोभायै रस आत्मा परे मनः ॥

द्वय–इति शब्दार्थभेदात्रितयान्वयि । परे–रसदोषाभावानुकूलवर्णादयः ।

---

(१) रास्ता—इति गपु० पाठः ।
(२) जीवनम्—इति गपु० पाठः ।

तत्र (१)रीतिमाह—

तत्तद्रसोपकारिण्यस्तत्तद्देशसमुद्भवाः ॥ २ ॥
पद्येषु रीतयो गौडी वैदर्भी मागधी तथा ॥

तदेतत्पल्लवयन्ति श्रीपादाः--

गौडी समासभूयस्त्वाद्वैदर्भी च तदल्पतः ।
अनयोः सङ्करो यस्तु मागधी साऽतिविस्तरा ॥
गौडीयैः प्रथमा मध्या वैदर्भैर्मैथिलैस्तथा ।
अन्यैस्तु चरमा रीतिः स्वभावादेव सेव्यते ॥

तत्र गौडी यथा--

उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ।
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥

वैदर्भी यथा—

मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से! क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥

मागधी यथा--

पाणौ पद्मधिया मधूककुसुमभ्रान्त्या पुनर्गण्डयो-
र्नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याऽधरे ।
लीयन्ते कवरीषु बान्धवजनव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति तरुणि ! स्थानानि रक्षिष्यसि(२)॥

इयं बहुप्रकारेति(३) विस्तृतमन्यत्र ।

---

(१) तत्र रीतिमाह—इति कपुस्तके नास्ति ।
(२) संरक्षसि—इति गपु० पाठः ।
(३) इयं च बहुधा-इति कपु० पाठः ।

भोजराजस्तु—

शस्ता विदग्धगोष्ठीषु वैदर्भी रीतिरुत्तमा ।

मागधी मध्यमा गौडी गौडस्त्रीकलहायते ॥

यदाह—

ब्रह्मन्! विज्ञापयामि त्वां स्वाधिकारजिहासया ।

गौडस्त्यजतु वा गाथामन्या वाऽस्तु सरस्वती ॥

उक्तिं विभजते—

लोकच्छेकार्भकोन्मत्तभेदादुक्तिश्चतुर्विधा ॥ ३ ॥

तत्र लोकोक्तिर्यथा—

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ

शेषान्मासान् गमय चतुरो लोचने मीलयित्वा ।

पश्चादावां विरहगुणितं तं तमात्माभिलाषं

निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥

इत्यादौ(१)'लोचने मीलयित्वे'ति । छेको विदग्धस्तस्योक्तिर्यथा—

योऽतिदीर्घासिताक्षस्य विलासचलितभ्रुवः ।

कान्तामुखस्यावशगस्तस्मै नृपशवे नमः ॥

अत्र 'नृपशव' इति । अर्भकोक्तिर्यथा—

स किं स्वर्गतरुः कोऽपि यस्य पुष्पं निशाकरः ।

मातस्ते कीदृशा वृक्षा येषां मुक्ताफलं फलम् ॥

अत्र 'पुष्पं निशाकरः, फलं मुक्ताफल'मिति । उन्मत्तोक्तिर्यथा—

काऽकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा

दोषाणां प्रशमाय नः(२) श्रुतमहो! कोपेऽपि कान्तं मुखम् ।

---

(१) इत्यादौ लोचने मीलयित्वेति इदं कपुस्तके नास्ति ।

(२) दोषाणामुपशान्तये—इति गपु० पाठः ।

किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः! स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति॥
अत्र विरहोन्मत्तस्यैवमभिधानम्। विन्यासविशेषवशाद्यत्राऽभिप्रायविशेषलाभेन मुदो हर्षस्योत्पत्तिः सा मुद्रा। तामिदानीं विभजते—

मुद्रा पदस्य वाक्यस्य विभक्तेर्वचनस्य च॥ ४॥

तत्र पदमुद्रा यथा—

निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी
भ्रूयुग्मस्य सनाभि मन्मथधनुर्ज्योत्स्ना स्मितस्याञ्चलम्।
सङ्गीतस्य च मत्तकोकिलरुतान्युच्छिष्टमेणीदृशः
सर्वाकारमहो! विधेः परिणतं विज्ञानशिल्पं चिरात्॥

अत्र 'निर्माल्या'दिपदानां गौणवृत्त्याऽभिप्रायविशेषान्मुत्प्रदायिता। वाक्यमुद्रा यथा--

रामे तटान्तवसतौ कुशतल्पशायि-
न्यद्यापि नाम भवतो भगवन्ननास्था।
स्मृत्वा तदेहि सगरं च भगीरथं च
दृष्ट्वाऽथवा मम धनुश्च शिलीमुखांश्च॥

अत्र 'सगरं च भगीरथं च'इत्यादिवाक्यस्य प्रागुपकाराभिप्रायेण दृष्ट्वा(१) यावदपकारसामर्थ्याभिप्रायेण निवेशनान्मुत्प्रदायिता। विभक्तिमुद्रा यथा--

श्रियं प्रदुग्धे विपदो रुणद्धि यशांसि सूतेऽविनयं प्रमार्ष्टि।
संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः॥

अत्र 'प्रदुग्ध' इत्यादितिङ्विभक्तीनां द्वयोर्द्विकर्मकयोर्निवेशनान्मङ्गल्याऽमङ्गल्यार्थकानामपि मङ्गल्य एवाभिप्रायवशाद्विभक्ति-

(१) दृष्ट्वाऽन्यादेरपकार--इति गपु० पाठः।

मुद्रा । वचनमुद्रा यथा—

विश्वंभरा भगवती भवतमिसूत
राजा प्रजापतिसमो जनकः पिता ते ।
तेषां वधूस्त्वमसि नन्दिनि ! पार्थिवानां
येषां गृहेषु सविता च गुरुर्वयं च ॥

अत्र 'वय'मिति बहुवचनेन सवितुरप्यहं महानित्यभिप्राया-द्वचनमुद्रा ।

प्रयोजनं यथैतासां रसमैत्री च विस्तरः ।
तथाऽलङ्कारसर्वस्वे समपञ्चप्रदर्शयम् ॥

इत्यलङ्कारशेखरे उपक्रमरत्नं
रीत्यादिबहिरङ्गत्रयमरीचिः ।

अथ वृत्तिं विभजते—

पदानां वृत्तयस्तिस्रः

तिस्रो वृत्तयः पदानां भवन्ति । शक्तिर्लक्षणा व्यञ्जना चेति । तत्र शक्तिरीश्वरेच्छा, या सङ्केत इत्युच्यते । सा पदेषु प्रसिद्धैव । सा च

कोशव्याकरणाप्तोक्तिवाक्यशेषोपमादितः ।
प्रसिद्धपदसम्बन्धाद्व्यवहाराच्च बुध्यते ॥

लक्षणा शक्यसम्बन्धः । सा च तात्पर्यानुपपत्त्या मुख्या-र्थानुपपत्त्या वा प्रवर्तते । यथा 'निर्माल्यं नयनाश्रिय' इत्यादौ 'निर्माल्यदासा'दिपदे । तृतीया वृत्तिर्व्यञ्जना । यथा—

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि ! दूति ! बान्धवजनस्याज्ञातपीडागमे !
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥

अत्राधमपदेन रन्तुं गतासीति व्यज्यते।

ननु रविरस्तं गत इत्यादौ तान्येव पदानि कथं श्रोतॄणां विचित्रबुद्धीरुत्पादयन्तीत्यत आह—

विचित्रसहकारिणाम्॥

तदेव हि पदं स्वरससमभिव्याहारप्रकरणतात्पर्यज्ञानादिरूपसहकारिभेदात्तत्तद्धियमुत्पादयति। दण्ड इव गवाभ्यजनघटौ।

ननु शक्त्यादिकमानुपूर्वीविशेषविशिष्टवर्णसमुदाये, तत्कथमेकदेशस्य बोधकता। अत आह—

स्वभाववैचित्र्यजुषाम्

विचित्रस्वभावानि खलु पदानि भवन्ति। क्वचिदेकदेशस्याद्यस्य बोधकता। यथा भीमसेनबलदेवादिपदादौ। क्वचिच्चरमस्य। यथा मतङ्गजवसुन्धराधराधरपदादौ। सा च तत्तत्पदस्मरणेन प्रकारान्तरेण चेत्यन्यदेतत्! किंच कर्णावतंसपदवत् शक्यतावच्छेदकस्य पृथगुपादानेनापि न पौनरुक्त्यं भवति। यथा करिबृंहितमयूरकेकादौ। क्वचित् शक्यस्यापि। यथा उदयाचलकारागृहादौ। उदयपदस्य पूर्वाचले, कारापदस्य बन्दिगृहे शक्यत्वात्। किंचित्पदं(१) परस्परविरुद्धतया तिरस्कृततृतीयकोटिकमिवान्यरप्रतिक्षेपेऽपरस्यैव लाभं जनयति। यथा 'शीतेतरानुष्णकरा हिमांशोः' इत्यादौ 'अपांसुलानां धुरि कीर्तनीया, स नन्दिनीस्तन्यमनिन्दितात्मा' इत्यादौ प्रकर्षलाभवदित्यवधेयम्। किंचित्पदमनपेक्ष्यरूढिकम्। यथा सिंहादवापद्विपदं नृसिंह' इत्यादौ। किंचिच्चानपेक्ष्ययौगिकम्। यथा 'क्षीराम्भोधे'रित्यादौ। अन्यथाऽनन्वयापत्तिः। किंच वामनयना वामोरुरिति भवति। नतु वामवदना वामपाणिरिति। सर्वं चेदं क्वचिदेव पदे। अत उक्तं स्वभावेति।

(१) किंच—इति क, खपुस्तकयोः पाठः।

तर्किं यद्व्यञ्जनापि पदमात्रवृत्तिरेव नेत्यत आह--

व्यञ्जनार्थत्रयेऽपि च ॥ १ ॥

शक्यलक्ष्यव्यङ्ग्यात्मक इत्यर्थः। शक्यार्थस्य व्यञ्जकता यथा--

अवलोकय निःस्पन्दो बिसिनीपत्रे बको भाति।

निर्मलमरकतभाजनपरिस्थितो(१) विमलशङ्ख इव ॥

अत्र निःस्पन्दशब्दस्या(२)र्थेन क्रियाविरहेण बकगतमाश्वस्तत्वं व्यज्यते। लक्ष्यार्थस्य यथा--

मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं

समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः।

उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं

वतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥

अत्र विकासः पुष्पधर्मो मुखेऽनुपपन्न इति लक्षितेन प्रस्तुतत्वेन लोकोत्तररमणीयतात्मकातिशयो व्यज्यते। एवमग्रेऽपि। व्यङ्ग्यार्थस्य यथा 'अवलोकय' इत्यादावेव व्यङ्ग्येनाश्वस्तत्वेन देशस्य सङ्केतयोग्यत्वं व्यज्यते।

त्रिविधस्यापीति। उत्तममध्यमाधमात्मकस्य। तत्र वाच्यनिरूपितव्यङ्ग्यप्रकर्षाधारत्वमुत्तमत्वम्। यथा 'निःशेषच्युतचन्दन'मित्यादौ। अत्र हि वाच्यार्थापेक्षया व्यङ्ग्यार्थ एव झटिति चमत्कारविशेषमारोहति। वाच्यनिरूपितव्यङ्ग्यप्रकर्षाऽनाधारत्वं मध्यमत्वम्। यथा--

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।

पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥

अत्र वञ्जुलकुञ्जे दत्तसङ्केता तरुणी न गतेति व्यज्यते।

---

(१) परिस्थिता विमलशङ्खशुक्तिरिव–इति कपु० पाठः।

(२) शब्दस्यानेकार्थक्रिया–इति गपु० पाठः।

तच्च गुणीभूतं, तदपेक्षया वाच्यस्यैव चमत्कारित्वात् । चमत्कृतिहेतुव्यङ्ग्यराहित्यमधमत्वम् । यथा--

वन्दामहे महेशानचण्डकोदण्डखण्डनम् ।
जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥

अत्र व्यङ्ग्यः कोऽप्यर्थस्तादृशो नास्ति । अत्र सर्वत्र(१) वक्तुरेव तात्पर्यं नियामकम् । तज्ज्ञानमेव बोधोपयोगि । तदभावादधममित्युच्यते । प्रपञ्चितं चेदं मयैव काव्य(२)रत्ने ।

ननु व्यञ्जना वृत्त्यन्तरमित्यत्र किं मानमिति, उच्यते-

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसङ्ग्रहस्य ।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत् ॥

अत्र प्रकरणेन 'भद्रात्मन' इत्यादिपदानां राज्ञि तदन्वययोग्ये चार्थेऽभिधानियन्त्रणेऽपि गजस्य तदन्वययोग्यस्य चार्थस्य व्यञ्जनयैव प्रतीतिः । वस्तुतस्तु—

अद्यारभ्य चिरं साधो ! निःशङ्कमिह सञ्चर ।
रेवाकुञ्जे मृगेन्द्रेण स दुष्ट(३)श्वाद्य घातितः ॥

अत्र भिक्षुकं प्रत्येवं वदन्त्याः प्रतिवेशिनं प्रति निःशङ्करत्यभिधानं स्फुटमिति । किंच रेवाकुञ्जस्य रतस्थानत्वं लभ्यते । सिंहबुद्धया परेण न गन्तव्यम् । सिंहस्तु वस्तुगत्या नास्त्येव । तदेतद्व्यञ्जनां विना प्रकारान्तरेण लब्धव्यमित्याशङ्कैव नास्तीति(४)।

इति श्रीमाणिक्यचन्द्रकारिते अलङ्कारशेखरे
उपक्रमरत्ने वृत्तिमरीचिः ।

---

(१) एतदग्रे-व्यञ्जनासु—इत्यधिकः पाठः ख, गपुस्तकयोः ।
(२) वाक्यरत्ने—इति क,खपु० पाठः ।
(३) दुष्टश्चाद्य—इति क, खपु० पाठः ।
(४) नास्तीत्याहुः श्रीपादाः--इति गपुस्तकेऽधिकम् ।

## द्वितीयं रत्नम् ।

दोषास्त्याज्या इत्युक्तम् । युक्तं चैतत् । यदाह(१)--

दोषः सर्वात्मना त्याज्यो रसहानिकरो हि सः ।
अन्यो गुणोऽस्तु वा मास्तु महान्निर्दोषता गुणः ॥

दण्डी च—

तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथंचन ।
स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ॥

दोषत्वं च रसोत्पत्तिप्रतिबन्धकत्वम् । रसकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वमिति यावत् । तत्र प्रथमं पददोषानाह—

कष्टाप्रयुक्तसन्दिग्धव्यर्थाश्लीलाप्रतीतकाः ॥
असाधुवाचकौ दोषाः पदेऽष्टावेव भाषिताः(२) ॥१॥

कष्टं-श्रुतिकटु । यथा—

बर्हिनिह्रादनार्हेऽस्मिन्काले जीमूतमालिनि ।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभतां चिरात् ॥

अत्र 'बर्हिनिह्रादनकार्तार्थ्या'दिशब्दाः । अप्रयुक्तम्-तथाऽऽम्नातमपि कविभिर्नादृतम् । यथा—

यतोऽयं दारुणाचारो न हन्ति सुरनिम्नगाम् ।
अतो मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा ॥

अत्र 'हन्ती'ति गमने, 'दैवत'शब्दः पुंसि कविभिर्न प्रयुक्तः । सन्दिग्धम्-सन्देहजनकम् । यथा—

अपिधानेन हे वत्स ! किमर्थमिह वर्तसे ।
आरादेवास्ति स प्रायो यतस्ते भयमुत्थितम् ॥

---

(१) इत्यन्तः पाठः कपुस्तके नास्ति ।

(२) नापरे—इति गपु० पाठः ।

अत्र 'अपिधानारा'च्छब्दौ । व्यर्थम्—प्रकृतार्थानुपयुक्तम् । यथा—

विभर्ति यश्च देहार्धे प्रियामिन्दुं हि मूर्धनि ।
स वै देवः खलु त्वां तु पुनातु मदनान्तकः ॥

अत्र 'च हि वै खलु तु' शब्दाः । अश्लीलम्—औज्ज्वल्याभाववत् । तदपि त्रिविधम् । अमङ्गलव्रीडाजुगुप्साभेदात् । क्रमेणोदाहरणम्—

विनाशान्मारुतेस्तस्य सु(१)मरुत्साधनोऽपि सन् ।
नासाग्रेण स सुग्रीवो वायुं त्यजति केवलम् ॥

अत्र 'विनाशसाधनवायु'शब्दाः । अप्रतीतम्—शास्त्रमात्रप्रसि(२)द्धम् । यथा—

त्रुटौ विश्रान्तिरित्येके पीलावस्तीति चापरे ।
त्वन्मध्यमाऽणिमा तन्वि ! न केनापि विभाव्यते ॥

अत्र 'त्रुटिपीलु'शब्दौ । असाधु—अनुशासनविरुद्धम् । यथा—

शातोदरि ! कथङ्कारं मानमेतच्चिकीर्षसि ।
मानिनीमानदलनो विजयत्येष चन्द्रमाः ॥

अत्र 'मानमेत, द्विजयती'ति । अवाचकम्—प्रकृतार्थाशक्तम् । यथा—

भूयो मत्ताद्विरदगमनां हारकेयूरयु(३)क्तां
पीनोत्तुङ्गस्तनभरनमन्मध्यभागाभिरामाम् ॥
स्मेरोदञ्चन्नवकिसलयस्पर्धिताम्राधरौष्ठीं
लक्ष्मीमाक्षिस्फुरितवदनामन्वहं संस्मरामि ॥

अत्र 'लक्ष्मी'पदमङ्गनायाः । ग्राम्यं त्ववाचकाश्लीलान्यतरान्तर्भावान्न पृथगिति ।

इत्यलङ्कारशेखरे दोषरत्ने पददोषमरीचिः ॥

---

(१) सुमहत—इति ख० पु० पाठः ।
(२) विरुद्धम्—इति खपु० पाठः । (३) भव्यां—इति गपु० पाठः ।

अथेदानीं साधारणान् (१) वाक्यदोषानाह--

न्यूनं विसन्धि व्याकीर्णं समासपुनरात्तकम् ॥
भग्नक्रमयतिच्छन्दो वाक्यगर्भमरीतिमत् ॥ १ ॥
अविमृष्टविधेयांशं समुदायार्थवर्जितम् ॥
विरुद्धमतिकृद्वाक्ये दोषा द्वादश कीर्तिताः ॥ २ ॥

तत्र न्यूनम्–अन्वयबोधप्रयोजकपदशून्यम् । यथा--

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ॥
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने भजति मयि नाद्यापि कुरुषु ॥

अत्र 'स्थित'मित्यनन्तर'मस्माभि'रिति, 'खिन्न'इत्यस्मात्पूर्व'मित्थ'मिति च दातुमर्हति । विसन्धि–सन्धिविरहो विरुद्धसन्धिश्च । आद्योऽपि द्विविधः, ऐच्छिकः प्रगृह्यादिनिबन्धनश्च । ऐच्छिकः सकृदपि दोषः । उभयोरुदाहरणम्(२)--

मेघानिलेन अमुना एतस्मिन्नद्रिकानने ।
पादपा उत्तमा उच्चा इदानीमेव पातिताः ॥

चरमश्चतुर्विधः, अश्लीलः कष्ट उत्वप्राप्त(३)विसर्गो लुप्तविसर्गश्च । क्रमेणोदाहरणानि--

वबुरिन्दीवरश्रेणिबान्धवा यत्र वायवः ।
मञ्जर्युद्गमगर्भाऽसौ तर्वाल्युर्वी विधूयते ॥
धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः ॥

---

(१) असाधारणान्—इति खपु० पाठः ।

(२) उभयोरुदाहरणम्–इति कपुस्तके नास्ति ।

(३) उपहतविसर्गो— इति गपु० पाठः ।

व्याकीर्णम्—व्यवहितान्वयम् । यथा—

मसृणचरणपातं गम्यतां भूः सदर्भा
विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः ।
तदिति जनकपुत्री लोचनैरश्रुपूर्णैः
पथि पथिकवधूभिर्वीक्षिता शिक्षिता च ॥

अत्र 'तद्गम्यताम् तद्विरचये'त्यन्वये तदिति व्यवहितम् । समाप्तपुनरात्तकम्—समाप्तौ प्रधानवाक्यार्थबोधे जाते पुनरुपात्तम् । यथा 'निर्माल्यं नयनश्रिय' इत्यादौ 'चिरा'दिति । यथा च(१)—

क्रेङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो
झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरध्वनिः ।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण—
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥

अत्र 'वेणुस्वन' इति । भग्नक्रमम्—यत्रार्थः शब्दो वा (२)क्रमेण नास्ति । उभयं यथा—

तुरङ्गमथ मातङ्गं प्रयच्छास्मै मदालसम् ।
कान्तिप्रतापौ भवतः सूर्याचन्द्रमसोः समौ ॥

भग्नयति यथा 'रामे तटान्तवसतौ कुशतल्पशायिन्यद्यापि' इत्यादौ । अत्राऽऽवश्यकी पदशेषयतिर्नास्ति । भग्नच्छन्दो यथा—

ततः परमोमित्युक्त्वा प्रतस्थे मुनिमण्डलम् ।
भगवानपि संप्राप्तः प्रथमोद्दिष्टमाश्रमम् ॥

अत्र (३)पञ्चमं लघु कर्तुमर्हति । यत्रापर्यवसितवाक्यमध्ये तदनपेक्षं वाक्यान्तरमनुप्रविशति, तद्वाक्यगर्भम् । यथा—

योग्यो यस्ते पुत्रः सोऽयं दशवदन! लक्ष्मणेन मया ।

---

(१) द्वितीयमिदमुदाहरणं गपुस्तके नास्ति ।
(२) शब्दो वा क्रमो नास्ति—इति गपु० पाठः ।
(३) एतदनन्तरं—चतुर्थे गौरवे—इत्यधिकः कपु० पाठः ।

रक्षैनं यदि शक्तिर्मृत्युवशं नीयते विवशः ॥

अत्र तृतीयपादगर्भता। अरीतिमत्—यां रीतिमुपक्रम्य प्रवृत्तं तद्भङ्गवत्। यथा—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥

अत्र तृतीयपादेऽनभिहितकर्त्रादरात्तद्भङ्गः। अविमृष्टविधेयांशम्—प्राधान्याऽनिर्दिष्टविधेयकम्। यथा—

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु।
वरेषु यद्बालमृगाक्षि! मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने॥

अत्र जन्मोद्दिश्यालक्ष्यत्वं विधेयम्, तच्च समासप्रविष्टतया न प्राधान्येन निर्दिष्टम्। समुदायार्थवर्जितं यथा—

जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मङ्गलानि।
तं ब्राह्मणी पृच्छति पुत्रकामा राजन्! रुमायां लशुनस्य कोऽर्घः(१)॥

अथ विरुद्धमतिकृत्—

कुबेरस्येव भगवान् भवानीरमणो हरः।
अकार्यमित्रमेकोऽसौ वासुदेवः किरीटिनः ॥

अत्र 'भवानीरमणा, ऽकार्यमित्र'शब्दौ विरुद्धां मतिं कुरुतः। अत्राऽसमर्थसमासो दोषान्तरमिति गोवर्धनः। यथा—

प्राक्प्रत्यक्पृथिवीभृतोः परिषदि प्रख्यातसंख्यावता—
मह्नायाऽद्भुततर्ककर्कशतया विच्छिद्य विद्यामदम्।
ये केऽप्युत्कलभूपते! तव सभासंभाविताः पण्डिताः
पत्रं श्रीजयदेवपण्डितकविस्तन्मूर्ध्नि विन्यस्यति(२) ॥

इत्यलङ्कारशेखरे दोषरत्ने वाक्यदोषमरीचिः।

---

(१) कोऽर्थः—इति गपु० पाठः। (२) पद्यमिदं गपुस्तके नोपलभ्यते।

अथाऽर्थदोषानाह—

अष्टाऽर्थदोषा विरसग्राम्यव्याहतखिन्नताः ॥
हीनाधिकाऽसदृक्साम्यं देशादीनां विरोधि च ॥१॥

तत्र विरसम्—प्रस्तुतरसविरुद्धम् । यथा—

किं रोदिषि हा ! रावैः सुतमरणशुचं जहीहि किं म्रियसे ।
सफलय यौवनमधुना सममनुरक्तेन सुतनु ! मया ॥

अत्र करुणशृङ्गारयोर्महान् विरोधः । ग्राम्यम्—अविदग्धोक्तिनिष्पन्नम् । यथा—

स्वपिम्यद्य नवद्याङ्गि ! सम्प्रत्यास्तस्तवान्तिके ।
मनागूरुद्वयं बाले ! कुञ्चितं समुदञ्चय ॥

व्याहतम्—उपात्तविरुद्धम् । यथा—

बिभ्रती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥

अत्र शैलदुहितृत्वभावप्रकाशनत्वे विरुद्धे । एकेन प्रस्तरप्रकृतित्वस्यापरेण विदग्धत्वस्य लाभात् । खिन्नम्—अपुष्टम् । यथा—

त्वत्प्रयाणसमुद्भूतधूली लुम्पति भास्करम् ।
कृपाणं पाणिना धत्से शूरो न त्वत्समो भुवि ॥

अत्र धूल्युत्थापनकृपाणधारणयोरशूरसाधारण्यात् शौर्यस्यापुष्टिः । हीनोपमं यथा—

क्वचिदग्रे प्रसरता क्वचिदापत्य निघ्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ॥

अधिकोपमं यथा—

वसिष्ठवदयं दासो हनूमानिव मूषिका ।
सरस्वानिव कूपोऽयं शुनीयं श्रीरिव स्वयम् ॥

अत्र यद्यप्युपमेयानां प्रकर्ष एव, तथाप्यासन्तिकरसहानेः सोऽपि न प्रतीयते । असदृशोपमं यथा—

निर्ययौ रुद्रनयनात् सस्फुलिङ्गो महानलः ।
वर्षन्ती शीकरासारं गङ्गा हिमगिरेरिव ॥

अत्र स्फुटप्रसादृश्यम् । देशादिविरोधि—यत्र देशकालवयो-ऽवस्थादिविरोधः प्रतीयते । यथा—

प्रवेशे चैत्रस्य स्फुटकुटजराजिस्मितदिशि
प्रचण्डे मार्तण्डे हिमकरसमानोष्ममहसि ।
जलक्रीडायातं मरुसरसि बालद्विपकुलं
मदेनान्धं विध्यन्त्यसमशरपातैः प्रशमिनः ॥

अत्र 'प्रवेशे चैत्रस्य स्फुटकुटजे'ति कालस्य, 'मरुसरसी'ति देशस्य, 'मदेनान्ध'मिति वयसः, 'प्रशमिन' इत्यवस्थाया विरोधः। इदं च तत्तच्छास्त्रतत्तत्प्रमाणतत्तल्लोकादिभेदादनन्तम् । यत्र तु लोकस्य कवेश्च प्रसिद्ध्योर्विरोधः, तत्र कविप्रसिद्धिरेव बलीयसीति । यथा—

सुसितवसनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताऽऽशङ्का क नासि शुभप्रदः ॥

अत्र कीर्तेर्ज्योत्स्नावत्प्रकाशकता लोकविरुद्धापि कविसमयसिद्धत्यदोषः ।

ननु कथममीषां दोषता, आकाङ्क्षादिज्ञानासत्त्वे शाब्दज्ञाना(१)-विलम्बादिति चेन्न। वाक्यान्तरापेक्षया काव्ये सामग्रीवैलक्षण्यात्। अन्यथा प्रतीतिवैलक्षण्यानुपपत्तेः। तथाचाऽन्वयबोधानुकूलाकाङ्क्षा-सत्त्वेऽपि रसोत्पत्त्यनुकूलाकाङ्क्षादिविरहो दोष इति ध्येयम् ।

सम्प्रदायानुरोधेन व्याख्येयं मम वस्तुतः(२) ।
तादृक्काव्यं प्रकुर्वीत यत्रोद्वेगो न धीमताम् ॥

इति श्रीमाणिक्यचन्द्रकारिते अलङ्कारशेखरे
दोषरत्नेऽर्थदोषमरीचिः ।

---

(१) ज्ञानविलम्बानुपपत्तेः—इति गपु० पाठः ।
(२) तत्त्वतः—इति गपु० पाठः ।

## तृतीयं रत्नम् ।

श्लाघ्या गुणा इत्युक्तम् । युक्तं चैतत् । यदाह—

अलङ्कृतमपि श्रव्यं न काव्यं गुणवर्जितम् ।
गुणयोगस्ततो मुख्यो गुणालङ्कारयो(१)गयोः ॥

(२)तदुक्तम्—

अलङ्कारसहस्रैः किं गुणो यदि न विद्यते ।
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥

उक्तं च श्रीपादेन(३)—'शब्दार्थौ काव्यस्य शरीरम्, आत्मा रसः, गुणाः शौर्यादिवत्, दोषाः काणत्वादिवत्, अलङ्काराः कुण्डलादिवत्' इति । तान् विभजते—

गुणः सामान्यतो द्वेधा शब्देष्वर्थेषु च स्थितः ॥
दोषाणामप्यदोषत्वं प्राहुर्वैशेषिकान्गुणान् ॥ १ ॥

तत्र

संक्षिप्तत्वमुदात्तत्वं प्रसादोक्तिसमाधयः ॥
अत्रैवान्यसमावेशात्पञ्च शब्दगुणाः स्मृताः ॥ २ ॥

स्वल्पाक्षरेण भूयोऽर्थकथनम्-संक्षेपः । यथा—

ते हिमाचलमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥

श्लाघ्यविशेषणत्वम्-उदात्तत्वम् । यथा—

श्रुत्वा यं सहसा ऽऽगतं निजपुरात्त्रासेन निर्गच्छतां
शत्रूणामवरोधनैर्जलभरप्रस्यन्दालिम्पत्पुटाः ।

---

( १ ) योर्द्वयोः—इति गपु० पाठः ।

( २ ) इत आरभ्य 'क्षीरविवर्जिताः' इत्यन्तः पाठः कपुस्तके नास्ति ।

( ३ ) भगवता—इति ख,गपु० पाठः ।

शुभ्रे सद्मनि पल्लविन्युपवने वाप्यां नवाम्भोरुहि
क्रीडाद्रौ नवशाद्वले विचलितग्रीवैर्विमुक्ता दृशः ॥

अत्र 'शुभ्रे पल्लविनी'त्यादिविशेषणानां श्लाघ्यता। झटित्यर्थप्रत्यायकत्वम्-प्रसादत्वम् । यथा—

स विश्वजितमारेभे यज्ञं सर्वस्वदक्षिणम् ।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥

कौशलादर्थविशेषलाभः-उक्तिः । यथा—

कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तम् ।
पुनरपि तदेव कथयसि मृतां नु कथयामि या श्वसिति ॥

अत्र कुशलमकुशलं वेत्युत्तरे कर्तव्ये 'जीवती'त्युक्तिविशेषाज्जीवितमात्रशेषता(१) लभ्यते । अन्यधर्माणामन्यत्राऽऽरोपणम्-समाधिः । यथा—

नीलाब्जानां नयनयुगलद्राघिमा दत्तपत्रः
कुम्भावैभौ कुचपरिकरः पूर्वपक्षीचकार ।
भ्रूविभ्रान्तिर्मदनधनुषो विभ्रमानन्ववादी-
द्वक्त्रज्योत्स्ना सितकररुचं (२) दूषयामास तस्याः ॥

अत्र पत्रदानादि(३)चेतनधर्माणामारोपणमिति ।

इत्यलङ्कारशेखरे गुणरत्ने शब्दगुणमरीचिः ।

---

अथाऽर्थगुणानाह—

भाविकत्वं सुशब्दत्वं पर्यायोक्तिः सुधर्मिता ॥
चत्वारोऽर्थगुणाः प्रोक्ताः परे त्वत्रैव सङ्गताः ॥१॥

---

(१) जीवितमात्रं लभ्यते—इति क,खपु० पाठः ।
(२) शशधररुचिं—सद्यः—इति गपु० पाठः ।
(३) एतदग्रे—पदानां—इति क,खपुस्तकयोराधिकः पाठः ।

सङ्गता अन्तर्भूताः। तदाहुः—

अलङ्काराऽऽश्रिताः केचिद्दोषान्तर्गताः परे।
चतुर्ष्वन्तर्गताः केचिदतश्चत्वार एव ते॥

तत्र भाविकत्वम्—अभिप्रायपूर्वकाभिधानम्। स्वयं दौसमिति यावत्। यथा—

दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति।
एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः॥

अत्रोपपतिं प्रति सङ्केताभिप्रायेणैवमभिधानम्। दारुणेऽर्थेऽदारुणपदता—सुशब्दता। यथा—

देवव्रते वाञ्छति दीर्घनिद्रां द्रोणे च कर्णे च यशोऽवशेषे।
लक्ष्मीसहायस्य तवाद्य वत्स! वात्सल्यवान् द्रौणिरयं सहायः॥

अत्र मुमूर्षति मृते चेत्यर्थे ईदृक्पदता। येन क्रमेण यद्वस्तु तत्क्रमाभिधानम्—पर्यायोक्तिः। यथा—

प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-
स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः।
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः॥

यत्र विशेषणद्वारा विशेष्यलाभः—सा सुधर्मिता। यथा—

अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम्।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि॥

अत्र पद्मिनीप्रकाशादीनां सूर्यनियतत्वात्तल्लाभः।

इत्यलङ्कारशेखरे गुणरत्नेऽर्थगुणमरीचिः।

---

इदानीं वैशेषिकान्गुणानाह—

पदवाक्यतदर्थेषु ये दोषाः पूर्वमीरिताः ॥
तेषां क्वचिददोषत्वं यत्तद्वैशेषिको गुणः ॥ १ ॥

उक्तानामेव दोषाणां विषयावस्थादिभेदाद्यददोषत्वं, तदेव वैशेषिको गुण इत्यर्थः(१)। केचित्तु—

एतेषामेव दोषाणां स्थानेष्वेतेष्वदोषता ।
परं नत्वस्ति गुणता पार्थक्यमनयोर्यतः ॥

अन्ये तु-क्वचिददोषतामात्रम्, क्वचिद्गुणतापि। तत्र सहृदयानामेव प्रतीतिः साक्षिणी। तदाहुः—

अलङ्कारे गुणे दोषे रसे वा काव्यसम्पदाम् ।
प्रतीतिरेव विदुषां प्रमाणमवसीयते ॥

श्रीपादस्तु-'रसोत्पत्तिप्रतिबन्धकतयैवैतेषां दोषता। यत्र केनापि निमित्तेन न रसप्रतिबन्धः, तत्रादोषत्वमुचितमेवे'त्याह। तत्र पदेषु यथासम्भवमाह—

**अनुप्रासेषु नो कष्टम्**

यथा-'महाराष्ट्रेषु नोष्ट्रिणः' इत्यादौ।

**श्लेषादौ नाप्रयुक्तता ॥**

यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
योगङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामाऽमराः
सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदोमाधवः ॥

अत्र क्षयशब्दो गृहे।

**मिषस्तुतौ (२) न सन्दिग्धम्**

---

(१) वैशेषिकगुणत्वमित्यर्थः—इति कपु० पाठः।

(२) मिथः स्तुतौ—इति क,खपु० पाठः।

यथा—

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥

न व्यर्थं यमकादिषु ॥ २ ॥

यथा—

दधत्युरोजद्वयमुर्वशीतलं भुवो गतेव स्वयमुर्वशी तलम् ।
बभौ मुखेनाऽप्रतिमेन काचन श्रियाऽधिका यां प्रति मेनका च न ॥

अत्र चकारः (१) ।

नाऽश्लीलं भगवत्यादौ

तदाहुः—

भगिनीभगवत्यादौ शिवलिङ्गगुहादिषु ।
अभिप्रेतकुमार्यादौ त्वश्लीलं नैव दुष्यति ॥

अश्लीलत्रयमत्रोक्तमिति ध्येयम् । दण्डी तु—

निष्ठ्यूतोद्गीर्णवान्त्यादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥

तद्विदे(२) नाऽप्रतीतकम् ॥

यथा—

सर्वकार्यशरीरेषु मुक्त्वाऽङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्माऽन्यो नास्ति मन्त्रो महीभृताम् ॥

सहायाः साधनोपाया देशकालौ बलाबलौ ।
विपत्तेश्च प्रतीकारः पञ्चाङ्गो मन्त्र उच्यते ॥

रूपं संज्ञाथ संस्कारो वेदनानुभवस्तथा ।
इति बौद्धाः शरीरेषु मन्यन्ते स्कन्धपञ्चकम् ।

इति भार्गवसर्वस्वे ।

नाऽसाध्वनुकृतौ

(१) चमत्कारः—इति क,खपु० पाठः ।
(२) तद्विधे—इति गपुस्तके पाठः ।

४

यथा—

हुं हु हुं न न ममेति युक्त्या जल्पितं जयति मानधनायाः ।

इत्यादौ ।

नापि लक्षणादाववाचकम् ॥ ३ ॥

लक्षणादेरशक्य(१)वृत्तित्वादिति हृदयम् ।

इदानीं वाक्येषु यथासम्भवमाह—

प्रतीत्यबाधान्न न्यूनम्

यथा—

तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥

'यत्रान्यत्क्रियापदं नास्ति, तत्र अस्तिर्भवतिर्वा प्रथमपुरुषे प्रयुज्यते' इति न्यायेन यत्र तद्द्वयेन नोपपत्तिस्तत्र तद्दूषणमित्यर्थः । एवं प्रकरणादिना पदान्तरस्य लाभे द्रष्टव्यम् । अत उक्तम्—प्रतीत्यबाधादिति ।

पादभेदे विसन्धि न ॥

यथा—

यद्यपि नदति सरोषं मृगपतिपुरतोऽपि मत्तगोमायुः ।
तदपि न कुप्यति सिंहो असदृशपुरुषेषु कः कोपः(२) ॥

इह यद्यपि यदुल्लिखितं सन्धिविरहो न दोष इति, तथाप्य-

---

(१) रशक्ये एव वृत्तित्वात्—इति क,खपु० पाठः ।

(२) इतः परं—

"इन्द्रस्याशुचिशूकरस्य च सुखे दुःखे च नास्त्यन्तरं
स्वेच्छाकल्पतया तयोः खलु सुधा विष्ठा च काम्याशनम् ।
रम्भा चाशुचिशूकरी च परमप्रेमास्पदं मृत्युतः
संत्रासो असमः स्वकर्मगतिभिश्चान्योन्यभावः समः ॥
इति शान्तोदाहरणम्" क पुस्तके पाठोऽयमधिको दृश्यते ।
स च विसन्धेः पादभेदत्वाभावादसङ्गत इत्युपेक्ष्यः ।

नुशासनविरुद्धत्वात् 'त्रिसदृशपुरुषेषु' इति पठनीयम् ।

न व्याकीर्णे तु सापेक्षे(१)

यथा—

अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥

इत्यादौ ।

नाऽन्यवाक्ये समासता ॥ ४ ॥

समाप्तपुनरात्तकं वाक्यभेदे न दोषः । यथा—

तं शरैः प्रतिजग्राह कालिङ्गा गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥

यथा वा(२)—

न किलाऽनुययुस्तस्य राजानो रक्षितुर्यशः ।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥

समस्ते यतिभङ्गो न

यथा—

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते !
धुर्यां लक्ष्मीमलमपि भृशं धेहि देव ! प्रसीद ।
यद्यत्पापं प्रतिजहि जगन्नाथ ! नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् ! भूयसे मङ्गलाय ॥

बालादौ(३) नाऽर्थवर्जितम् ॥

आदिपदेन वीरवातुलादि(४)परिग्रहः । यथा-'क्काकार्य'मित्यादौ ।

---

(१) साकाङ्क्षे—इति गपु० पाठः ।

(२) द्वितीयमिदमुदाहरणं गपुस्तके नास्ति ।

(३) मत्तादौ—इति खपु० पाठः ।

(४) विरहिबाला—इति खपुस्तके ।

विरुद्धं न तथा वाक्ये(१)

'विरुद्धां धियमुत्पादयत्वि'त्यभिप्रायेण प्रयोगे तत्र दोष इत्यर्थः ।

वाक्यार्थे यथासम्भवमाह—

विरसं नाऽप्रधानके ॥ ५ ॥

यथा—

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥

द्व्यर्थं न नर्मणि ग्राम्यम्

'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्त्वि'ति भरतोक्तेः ।

सर्वत्र हेतुमाह—

रसहानेरयोगतः ॥

अथ सर्वसाधारणमदोषत्वमाह—

तत्र तत्राभिधातव्ये तथाऽनुकरणादिषु ॥ ६ ॥
उन्मत्ताद्यभिधानेषु कोऽपि दोषो न विद्यते ॥

श्रीपादस्तु—

तदर्थातिशये शैघ्र्ये दैन्ये कोपेऽवधारणे ।
विषादे विस्मये हर्षे पुनरुक्तं न दुष्यति ॥

इति श्रीमाणिक्यचन्द्रकारिते अलङ्कारशेखरे
गुणरत्ने वैशेषिकगुणमरीचिः ।

---

(१) काव्ये—इति क,खपु० पाठः ।

## चतुर्थं रत्नम् ।

अलङ्कारस्तु शोभायै इत्युक्तम् । तत्र साधु । यतः—

गुणवत्यपि निर्दोषेऽलङ्कारैः काव्यराजनि ।
जायतेऽन्यैव सुषमा रत्नालङ्करणैरिव ॥

आहुश्च—'निर्दोषं गुणवत्काव्य'मित्यादि । तत्र चमत्कारविशेषकारित्वमिति (१) सामान्यलक्षणम् । शब्दार्थनिष्ठत्वेन विशेषितं विशेषणद्वयम् ।(२) 'परम्परया रसोपकारित्वं त' दित्यन्ये । तत्र प्रथमं शब्दालङ्कारान् विभजते--

चित्रवक्रोक्त्यनुप्रासगूढश्लेषप्रहेलिकाः ॥
प्रश्नोत्तरं च यमकमष्टाऽलङ्कृतयो ध्वनौ ॥ १ ॥

तत्र कौतुकविशेषकारि चित्रम् । तच्च खड्गचक्रपद्मादिभेदादनन्तम् । यथा—

सर्वतोभद्रधेन्वादि गोमूत्रीमुरजादि च ।
गतप्रत्यागताद्याहुश्चित्रकाव्यं कवीश्वराः(३) ॥

तच्च माघादौ सुव्यक्तत्वान्नेहोदाह्रियते । अन्याभिप्रायेणोक्तं वाक्यमन्येनाऽन्यार्थकतया यद्योज्यते—सा वक्रोक्तिः । एतदेव वाकोवाक्यमुच्यते । यथा—

कोऽयं द्वारि ? हरिः प्रयाह्युपवनं शाखामृगस्यात्र (४) किं
कृष्णोऽहं दयिते ! बिभेमि सुतरां कृष्णादहं वानरात् ।
मुग्धेऽहं मधुसूदनो व्रज लतां तामेव पुष्पान्विता—
मित्थं निर्वचनीकृतो दयितया ह्रीणो(५) हरिः पातु वः ॥

---

(१) कारित्वमलङ्कार—इति खपु० पाठः ।
(२) विशेषलक्षणद्वयम्—इति क,गपु० पाठः ।
(३) मुनीश्वराः—इति क,खपु० पाठः ।
(४) शाखामृगेणात्र—इति कपुस्तके ।
(५) मुग्धो—इति कपु० पाठः ।

वर्णसाम्यमनुप्रासः । स च द्विविधः, लाटानुप्रासश्छेकानुप्रासश्च । तत्राऽसकृदावृत्तवर्णत्वम्—लाटानुप्रासः । यथा—

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितः स तन्वङ्ग्या कृतार्थयतु मानसम् ॥

अनेकस्य व्यञ्जनस्य सकृत्साम्यम्—छेकानुप्रासः । यथा—

नितम्बगुर्वी गुरुणा प्रयुक्ता वधूर्विधातृप्रतिमेन तेन ।
चकार सा मत्तचकोरनेत्रा लज्जावती लाजविमोक्षमग्नौ ॥

'पदमेकं हृदा कृत्वा तदनुप्रासकाम्यया
आदिक्षान्तलिपौ कादिक्षान्तशब्दं विचिन्तयेत्' ॥

इति रहस्यम् । गूढम्—क्रियागुप्तादिः । यथा—

पुंस्कोकिलकुलस्यैते नितान्तमधुरारवैः ।
सहकारद्रुमा रम्या वसन्ते कामपि श्रियम् (१) ॥

इदं च नाना । यदाहुः—

क्रियाकारकसम्बन्धगुप्तान्यामन्त्रितस्य च ।
गुप्तं तथा समासस्य लिङ्गस्य वचनस्य च ॥

एकोच्चारणापन्हुतभेदत्वम्—श्लेषः । यथा—'येन ध्वस्तमनोभवेने'त्यादौ । अयं चाष्टधा । यदाह—

विभक्तिपदवर्णानां लिङ्गस्य वचनस्य च ।
भाषाप्रकृत्योर्भेदेन श्लेषाः स्युः प्रत्ययस्य च ॥

प्रहेलिका—सकृत्प्रश्नः । सा च च्युताक्षरा दत्ताक्षरादिः । यथा—

विदग्धः सरलो रागी नितम्बोपरि संस्थितः ।
तन्वङ्ग्याऽऽलिङ्गितः कण्ठे कलं कूजति को विटः ॥

---

(१) अत्र 'अधुः' इति क्रिया । रम्या एते सहकारद्रुमाः पुंस्कोकिलकुलस्यैं आरवैर्वसन्ते नितान्तं कामपि श्रियं अधुः—इत्यन्वयः ।

अत्र 'त्रिट' इत्यत्र विकारस्थाने घकारदाने द्वितीयोऽर्थो भवति । सा च षोढा । तदाह—

महेलिका सकृत्प्रश्नः सा च षोढा च्युताक्षरा ।
दत्ताक्षरोभयं मुष्टिर्बिन्दुमत्यर्थवत्यपि(१) ॥

प्रश्नोत्तरमपि द्विविधम् , बहिरन्तश्च । तत्र बहिः प्रश्नोत्तरं यथा—

प्रायः कार्ये नियुज्यन्ते जनाः सर्वत्र कीदृशाः ।
'धाने'त्ययं(२) भवेच्छब्दो नौवाची वद कीदृशः ॥

सावधानाः(३) । अन्तः प्रश्नोत्तरं यथा—

काहमस्मि गुहा वक्ति प्रश्नेऽमुष्मिन् किमुत्तरम्(४) ।
कथमुक्तं न जानासि कदर्थयसि यत्सखे ! ॥

अतुल्यार्थत्वे सत्यानुपूर्वीविशेषविशिष्टनियतव्यञ्जनसमुदायाभ्यासो–यमकम् । यथा—

नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः॥

तच्चेदं सङ्क्षेपेण सप्ताशीतिप्रकारमिति चान्यत्र विस्तरः । एतच्चित्रमिति (५) गोवर्धनः ।

इत्यलङ्कारशेखरे अलङ्काररत्ने शब्दालङ्कारमरीचिः ।

---

(१) विंद्रुमत्यर्थवत्यपि–इति कपु० पाठः ।

(२) नाधेत्ययं—इति क,गपुस्तकयोः पाठः ।

(३) सौ—औकारसहितः अधा-धाकाररहितश्च नाः । 'नौः' इत्यर्थः ।

(४) का–प्रतिध्वनिकारिणीति, गुहा–संवरणकारिणीतिवोत्तरम् । कायतेः 'अन्येभ्योऽपी'ति डः, स्त्रीत्वाट्टाप् । गूहतेस्तु इगुपधलक्षणः कः, अदन्तत्वाट्टाप् ।

(५) एतच्चित्र एवान्तर्भूतमिति–इति खपुस्तके ।

अथाऽर्थालङ्कारान् विभजते—

उपमारूपकोत्प्रेक्षासमासोक्तिरपह्नुतिः ॥
समाहितं स्वभावश्च विरोधः सारदीपकौ ॥१॥
सहोक्तिरन्यदेशत्वं विशेषोक्तिविभावने ॥
एवं स्युरर्थालङ्काराश्चतुर्दश न चापरे ॥ २ ॥

तत्र भेदे सति साधर्म्यम्—उपमा। अधिकगुणवत्तया सम्भाव्यमानमुपमानम्। निकृष्टगुणवत्तया सम्भाव्यमानमुपमेयम्। तां विभजते—

वाक्यार्थाऽतिशयश्लेषनिन्दाभूतविपर्ययाः ॥
संशयो नियमः स्वं च विक्रियेत्युपमा दश ॥३॥

तत्र वाक्यार्थेनैव वाक्यार्थो यदुपमीयते—सा वाक्यार्थोपमा। सा च द्वयी, प्रत्येकं सादृश्यानपेक्षा तत्सापेक्षा च। आद्या यथा—

कामिनीनयनकज्जलपङ्कादुत्थितो मदनमत्तवराहः।
कामिमानसवनान्तरचारी कन्दमुत्खनति मानलतायाः॥

अन्त्या यथा—

त्वदाननमधीराक्षमाविर्दशनदीधिति।
भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम्॥

यत्रातिशयधर्मोपन्यासः—साऽतिशयोपमा। यथा—

कल्पद्रुमो न जानाति न ददाति बृहस्पतिः।
अयं च जगतीजानिर्जानाति च ददाति च॥

पदश्लेषनिबन्धनसाम्यम्—श्लेषोपमा। यथा—

तमालपत्राभरणा राजते विलसद्वयाः।
बालेवोद्यानमालेयं सालकाननशोभिनी॥

यत्रोपमानस्य निन्दया प्रतिक्षेपः सा निन्दोपमा। यथा—

नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात् कदलीविशेषाः ।
लब्ध्वापि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानवाह्याः ॥

यत्राऽसंसृष्टत्वज्ञानेन संसर्गमारोप्य साम्यप्रसञ्जनम्–सा भूतोपमा । यथा––

उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥

यत्रोपमानस्यैवोपमेयता–सा विपर्ययोपमा । यथा––

अथ सुललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥

इत्यादौ । यत्रोपमानोपमेययोः संशयकोटिता–सा संशयोपमा । यथा––

किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखं
किमब्जे किं मीनौ किमु मदनबाणौ किमु दृशौ ।
खगौ वा गुच्छौ वा कनककलशौ वा किमु कुचौ
तडिद्वा तारा वा कनकलतिका वा किमबला ॥

यत्रेतरव्यावृत्त्या साम्यलाभः–सा नियमोपमा । यथा––

कस्ते पुरन्दरादन्यः प्रतिमल्लो भविष्यति ।
ऋते सहस्रकिरणात् त्वत्प्रतापसमो हि कः ॥

यत्रोपमानान्तरविरहतात्पर्येण स्वसाम्यम्–सा स्वोपमा । यथा–

आघूर्णितं पक्ष्मलमक्षियुग्मं प्रान्तद्युतिश्वैत्यजितामृतांशु ।
अस्या इवास्याश्चलदिन्द्रनीलगोलाऽमलश्यामलतारतारम् ॥

अभेदानुमानवदिह भेदो द्रष्टव्यः । यत्रोपमेयमुपमानविकारतयोच्यते–सा विक्रियोपमा । यथा––

हरिणादथ तन्नयनादथ पद्मात्पद्मपत्राच्च ।
आहृत्य कान्तिसारं विधिरसृजत् सुभ्रुवो दृष्टिम् ॥

श्रीपादस्तु—'समभिव्याहारोपमाप्यस्ति' इत्याह । सा यथा—

प्रकृत्यैव मनोहारि वदनं हरिणीदृशः ।
चन्द्रे ह्लादकता कस्मात् पद्मः केन परिष्कृतः ॥

अत्र सर्वत्र—

न्यूनाधिकत्वशङ्का चेद्विभागेषु तदिष्यताम् ।
किंचिद्विशेषमादाय भेदोऽभेदश्च कश्चन ॥
काचित्समस्तान्वयिनी क्रियामात्रान्वया परा ।
विशेषणान्वया काचिदुपमा कापि तत्परा ॥

अत्र च—

न्यूनता साम्यमाधिक्यं यद्यदेवाभिधीयते ।
अहो ! काव्यस्य माहात्म्यं समतैव प्रतीयते ॥

तदाह राजशेखरः—

समानमधिकं न्यूनं सजातीयं विरोधि च ।
सकुल्यं सोदरं कल्पमित्याद्याः साम्यवाचकाः ॥
अलङ्कारशिरोरत्नं सर्वस्वं काव्यसम्पदाम् ।
उपमा कविवंशस्य मातैवेति मतिर्मम ॥

इत्यलङ्कारशेखरे अर्थालङ्कारे उपमामरीचिः ।

---

अतिसाम्यादपह्नुत(१)भेदयोरुपमानोपमेययोरभेदप्रत्ययो रूपकम् । यदाह—

तद्रूपकमभेदो यदुपमानोपमेययोः ।

इति । दण्डी च—

उपमैव तिरोभूतभेदा रूपकमुच्यते(२) ।

इति । तद्विभजते—

---

(१) दपह्नुतभेदप्रत्ययो रूपकम—इति गपु० पाठः ।
(२) मिष्यते—इति कपु० पाठः ।

विरुद्धं च समस्तं च व्यस्तं रूपकरूपकम् ।
श्लिष्टं च रूपकं तस्मात् सङ्क्षेपात्पञ्चधा स्मृतम् ॥ १॥

तत्र–यत्रोपमानविरुद्धोऽर्थः–तद्विरुद्धम् । यथा—

दिवा न परिभूयते नच मनागपि क्षीयते
नवा चरमवारिधेः पयसि लुप्तिमाविन्दति ।
नच त्रिदशसुभ्रुवां वदनकान्तिभिर्जीयते
यशस्तुहिनदीधितिर्जयति कोऽपि भूमीपतेः ॥

समस्तं यथा—–

तस्या बाहुलता पाणिपद्मं चरणपल्लवम् ।
मुखेन्दुरक्षिभ्रमरौ सर्वस्वं पुष्पधन्वनः ॥

व्यस्तं यथा––

भुजौ मृणाले वदनं सुधांशुः कुन्दानि दन्ताश्चरणौ सरोजे ।
स्मितं प्रसूनानि करौ प्रवाले पयोधरौ भूमिधरौ मृगाक्ष्याः ॥

रूपकरूपकं यथा—

मुखपङ्कजरङ्गेऽस्मिन् भ्रूलतानर्तकी तव ।
नरीनर्ति लसत्स्वर्णकेतकीदललोचने ॥

श्लिष्टरूपकं यथा—

राजहंसोपभोगार्हं भ्रमरप्रार्थ्यसौरभम् ।
पुष्णाति सुषमां कांचिन्मुखपङ्केरुहं तव ॥

इदं च समस्ताऽसमस्तादिभेदादनन्तम् । लक्षणाप्यत्रैवान्तर्भवति । उपमानोपमेययोरभेदप्रतिपत्तेरत्रापि सत्त्वात् । तदुक्तम्–'रूपकं लक्षणादिक'मिति। सा च द्विधा, समस्तासमस्तभेदात् । तत्राद्या यथा—

उदयति कनकाचलयोरुपरि चलत्पङ्कजश्चन्द्रः ।
तदुपरि घनान्धकारः कस्य कृते धातुरीदृशी सृष्टिः ।

अन्त्या यथा—

तामरसे सालसता जलमुचि कश्चिद्विपर्यासः ।
निस्पन्दता लतायां कथयति कस्यापि पुण्यानि ॥
इत्यलङ्कारशेखरे अर्थालङ्कारे रूपकमरीचिः ।

---

अन्यनिमित्तके वस्तुन्यन्यनिमित्तकत्वाऽऽरोपणम्—उत्प्रेक्षा । यथा—
गमनमलसयातैः कुम्भलक्ष्मीं कुचाभ्या—
मविकलकरशोभामूरुकाण्डद्वयेन ।
यदियमहरदेषां हेतुनाऽनेन नूनं
निजवपुषि करीन्द्राः पांसुपूरं क्षिपन्ति ॥
इयं च—
सर्वालङ्कारसर्वस्वं कविकीर्तिविवर्धिनी ।
उत्प्रेक्षा हरति स्वान्तमचिरोढा स्मितादिव ॥
शङ्के मन्ये ध्रुवं प्रायो नूनं जानामि तर्कये ।
इवेत्यादिभिरुत्प्रेक्षा व्यज्यते काव्यवर्त्मनि ॥
अन्यदभिप्रेत्याऽन्याभिधानम्—समासोक्तिः । सैव चाऽन्यापदेश उच्यते । यथा—
त्वं पीयूष ! दिवोऽपि भूषणमसि द्राक्षे ! परीक्षेत को
माधुर्यं तव विश्वतोऽपि विदिता माध्वीक ! साध्वी कथा ।
एतत् किन्तु तथाप्यरुन्तुदमिव ब्रूमो न चेत्कुप्यसे
यः कान्ताधरपल्लवे मधुरिमा नान्यत्र कुत्रापि सः ॥
किंचिदपह्नुत्य यदन्यार्थप्रदर्शनम्—साऽपह्नुतिः । यथा—
सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् ।
नागरिकः किमु मिलितो नहि नहि सखि ! हैमनः पवनः ॥
कलमधुरं किल कूजन् यमुनाकूलेषु नीलघनदेहः ।
दृष्टः सखि ! गोपालो नहि नहि सखि ! कोकिलो दृष्टः(१) ।

---

(१) पद्यमिदं क,गपुस्तकयोर्नोपलभ्यते ।

आरब्धानुकूलाऽऽकस्मिकसहकारिलाभः—समाहितम् । यथा—

मानापनोदनविधौ मदिरेक्षणाया
यावन्नमामि चरणावथ तावदेव ।
नीपस्खलन्नवसमीरपुरःसराणि
प्रादुर्बभूवुरचिराद् घनगर्जितानि ॥

यस्य वस्तुनो यत्स्वभावता तदाख्यानम्—स्वभावः । तदेव जातिरुच्यते । यथा—

चलति कथंचित्पृष्टा यच्छति वाचं कथंचिदालीनाम् ।
आसितुमेव हि मनुते गुरुगर्भभरालसा सुतनुः ॥

विरोधो द्विविधः । तत्राद्यः—पारमार्थिकाऽविरोधेऽपि औचित्येन विरोधिता (१) प्रतीयते यत्र, सः । यथा 'मनीषिताः सन्ति गृहेषु देवताः' इत्यादौ । द्वितीयस्तु—यथाश्रुते विरोधसन्धानेऽपि यत्राभिप्रेता(२)र्थमादायाऽविरोधः । अयमेव विरोधाभास उच्यते । यथा—

भक्तानां कामदस्तुष्टो रुषा कामं दहन्नपि ।
अपि ज्ञानमयः स्थाणुर्यस्तमीशं स्तुवीमहि ॥

उत्तरोत्तरं यत्र सारोत्कर्षः—स सारः । यथा—

विषयेषु तावदबलास्तास्वपि गोप्यः स्वभावमृदुवाचः ।
मध्ये तासामपि सा तस्या अपि साचि वीक्षितं किमपि ॥

समस्तवाक्योपकारकत्वम्—दीपकत्वम् । तच्चाऽभिन्नं भिन्नं च । अभिन्नं यथा 'पाणौ पद्मधियेत्यादौ' तत्तत्कारकक्रियादिभेदादनन्तम् । भिन्नं यथा—

नृत्यन्ति निचुलोत्सङ्गे गायन्ति च कलापिनः ।
बध्नन्ति च पयोदेषु दृशो हर्षाश्रुगर्भिणीः ॥

अत्र विस्तरभिया सर्वं नोदाह्रियते । एतच्च मालादीपका-

---

(१) विरुद्धतया—इति ख,गपु० पाठः ।
(२) भिप्रेतमासाद्याविरोधः—इति कपु० पाठः ।

दिभेदादनन्तम् । अत्र पूर्वापरवाक्यार्थयोरुपकार्योपकारक(१)-शृङ्खला-मालादीपकम् । तत्रोत्तरस्य पूर्वोपकारकत्वं यथा—

चारुता वपुरभूषयदासां तामनूननवयौवनयोगः ।
तं पुनर्मकरकेतनलक्ष्मीस्तां मदस्तमपि वल्लभसङ्गः ॥

पूर्वस्योत्तरोपकारत्वं यथा—

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते(२)
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः, शरैररिशिरस्तेनापि भूमण्डलं,
तेन त्वं, भवता च कीर्तिरतुला, कीर्त्या च लोकत्रयम् ॥

समानकालोक्तिः-सहोक्तिः । सा द्वयी । उदासीनयोस्तवराप्रतियत्तये, कार्यकारणयोरपि । आद्या यथा--

सह दीर्घा मम श्वासैरिमाः सम्प्रति रात्रयः ।
समं मम शरीरेण क्षीयन्ते दिवसा अमी ॥

अन्त्या यथा--

वर्धते सह पान्थानां मूर्छया चूतमञ्जरी ।
पतन्ति च समं तेषामश्रुभिर्मलयानिलाः ॥

प्रयोज्यप्रयोजकयोर्वैयधिकरण्यम्—अन्यदेशत्वम् । यथा--

सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।
साऽऽक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥

कारणे सत्यपि कार्याभावो-विशेषोक्तिः । यथा--

आवाति वारिधरशीकरवारिवर्षी
स्वैरं कदम्बवनदुर्ललितः समीरः ।

---

(१) पकारकम्—इति क,गपु० पाठः ।
(२) समासादिते—इति क,खपुस्तकयोः पाठः ।

अङ्गेऽर्पितानि नलिनीनवपल्लवानि
तापस्तथापि सुदृशः शिथिलो न जातः ॥

कारणं विनापि कार्योदयो—विभावना । यथा—

नाङ्गेषु रत्नाभरणानि सन्ति निश्वासहार्याण्यपि नांशुकानि ।
तथापि सा सम्प्रति सारसाक्षी दिने दिने काममपि कान्तिमेति ॥

केचित्तु—'अन्यदेशत्वमेव विशेषोक्तिविभावने, अधिकरणद्वयमादाय'। अन्ये तु—'अनयोरेवैकेनाऽपरस्यान्यथासिद्धिः, व्यतिरेकमादाय' इति। गोवर्धनस्त्वाभ्यामेवान्यथासिद्ध्याऽन्यदेशत्वमेव निराचकार। व्यतिरेकालङ्कारस्त्वतिरिच्यत इत्येके। स च यथा—

कादाचित्कीं द्युतिं धत्ते कलङ्की क्षीयतेऽन्वहम् ।
दोषाकरः कथङ्कारं त्वदाननसमः प्रिये ! ॥

एकेनापरस्या(१)ऽन्यथासिद्धिराक्षेपः। सोऽपि पृथगित्यपरे। यथा—

इन्द्रेण किं स यदि कर्णनरेन्द्रसूनु-
रैरावतेन किमसौ यदि तद्विपेन्द्रः ।
दम्भोलिनाऽप्यलमयं यदि तत्प्रतापः
स्वर्गोऽप्ययं ननु मुधा यदि तत्पुरी सा ॥

सुखबोधाय बालानामतिकोमलवर्त्मना ।
मया संक्षेपणादित्थमलङ्काराः प्रदर्शिताः ॥
यथैतेषां मिथो भेदः परेषां नातिरेकिता
तथाऽलङ्कारसर्वस्वे सप्रपञ्चप्रदर्शयम् ॥

इति श्रीमाणिक्यचन्द्रकारिते अलङ्कारशेखरे
अलङ्काररत्ने अर्थालङ्कारमरीचिः ।

---

(१) प्रस्तुतस्यासिद्धि—इति क,खपु० पाठः ।

पञ्चमं रत्नम् ।

उपमा काव्यसम्पदां सर्वस्वम्, सा च साधर्म्यमिति । इदानीं तस्य प्रतियोग्यनुयोगिनावाह--

चन्द्रकलाऽम्बुजदाम शिरीषं विद्युत्तारा कनकलता च ।
दमनककाञ्चनयष्टी दीपः सर्वैरेभिर्योषिद्वर्ण्या ॥ १ ॥

यथा—

शिखेव दीपस्य, लतेव हैमी, कलेव चान्द्री, स्रगिवाम्बुजानाम् ।
शिरीषपुष्पं स्मरहेमयष्टी सा मे कदा लोचनगोचरः स्यात्(१) ॥

दमनकतरुशाखालम्बि छोलङ्ग(२)युग्मं
तुहिनकिरणविम्बे खञ्जरीटप्रचारः ।
विकचकमलकोशे दाडिमीवीजपङ्क्ति-
स्त्रितयमिदमपूर्वं दृष्टमेकत्र चित्रम् ॥

'तडिद्वा तारा वेत्यादि' 'उद्भिन्नया रत्नशलाकया वे'त्यादि-दर्शनात्तथात्वं वर्ण्यत इत्याहुः ।

अत्यन्तानन्दसन्दोहदायिनी परिवर्ण्यते ॥

योषिदित्यनुवर्तते । यथा—

सा कौमुदी नयनयोरमृतैकवर्ति-
रानन्दपङ्कजवनी(३)विलसल्लताभा ।
प्राणाः स्मरस्य जनपुण्यतरोः फलानि
साफल्यमक्षिजनुषां क गता न जाने ॥

शक्तिर्मूर्तिमती स्मरस्य जगतां नारीमयं मण्डनं
कान्तानामुपमानकल्पनकलाकान्तेः समुत्तेजनम् ।

---

(१) पद्यमिदं गपुस्तके नास्ति ।
(२) रोलम्ब—इति खपुस्तके ।
(३) वतीविलसत्तडागः—इति खपु० पाठः ।

लक्ष्मीः संसृतिसागरस्य सरसी लावण्यपुण्याम्भसां
सा राजव्रजचक्षुषां क्षणमभूदानन्दकन्द(१)स्थली ॥
रोचनास्वर्णविद्युद्भिर्हरिद्राभिर्वराटकैः ॥ २ ॥
चम्पकैर्हैमकेतक्या वर्ण्यते तत्तनोर्द्युतिः ॥
यथा—

प्रत्यग्रपद्मबीजद्युति काञ्चनकेतकच्छायम् ।
गोरोचनाऽतिगौरं वपुरथ साक्षात्कृतं तस्याः ॥
चम्पकदामहरिद्राकाञ्चनसौदामिनीनां च ।
द्वेपयति कान्तिमेषा निजवपुषा पद्मपत्राक्षी ॥

इदमुपलक्षणम् । 'तामग्रतस्तामरसान्तराभा'मित्यादेश्च,
वेत्रत्वचा तुल्यरुचां वधूनां कर्णान्ततो गण्डतलागतानि ।
भृङ्गाः सखेलं यदि नापतिष्यन् कोऽवेदयिष्यन्नवचम्पकानि ॥
इत्यादेश्च, 'मोचात्वचः पञ्चषपाटनाना'मित्यादेश्च, 'काश्मीरगौरवपुषामभिसारिकाणामाबद्धरेख'(२)मित्यादेस्तत्तत्साम्यमपि बोध्यम् ।

तमःशैवालपाथोदबर्हभ्रमरचामरैः ॥ ३ ॥
यमुनावीचिनीलाश्मनीलाब्जाभ्रैः समः कचः ॥
यथा—

न जीमूतच्छेदः स हि गगनचारी नच तमो
नचाऽस्येन्दोर्मैत्री नच मधुकरास्ते हि मुखराः ।

---

(१) पण्यस्थली—इति कपुस्तके, पुण्यस्थली—इति च पाठः खपुस्तके ।

(२) काश्मीरगौरवपुषामभिसारिकाणा-
माबद्धरेखमभितो मणिमञ्जरीभिः ।
एतत्तमालदलनीलतमं तमिस्रं
तत्प्रेमहेमनिकषोपलतां प्रयाति ॥
खपुस्तके सम्पूर्णमिदं पद्यम् ।

न पिच्छं तत्केकिन्युचितमसितोऽयं नच मणि-
मृदुत्वादां ! ज्ञातं घनचिकुरपाशो मृगदृशः ॥
जानामि जानकि ! कलिन्दसुताजलेऽस्मिन्
स्नातासि हन्त ! यदिमास्तव कुन्तलानाम् ।
वीचीषु नीलकमलस्रजि शैवलेषु
दृश्यन्त एव रुचयः कणशः प्रकीर्णाः ॥
तारा रदानां, वदनस्य चन्द्रं, रुचा कचानां च नभो जयन्तीम् ।
आकण्ठमक्ष्णोर्द्वितयं मधूनि महीभुजः कस्य न भोजयन्तीम्(१) ॥
कूर्पासेन स्थगितहृदया सम्पुटं हाटकीयं
मस्तन्यस्ताञ्चलनिवसना चामरं वारिदाभम् ।
यत्राऽऽसीना रतिरिव वणिक्प्रेयसी वीथिकायां
विक्रीणीते मुकुलितमुखी संज्ञया मौक्तिकानि ॥
अङ्गुल्या यदि निर्दिशेदरुणिमा लाक्षागुटीविभ्रमं
वाचा यद्यथ शुद्धपारदवटीबुद्धिं रदस्य द्युतिः ।
दृग्भङ्ग्या यदि नीलिमा वितनुते काचस्रजः प्रत्ययं
विक्रेतुं बत ! मौक्तिकानि भवति व्यग्रा वणिक्प्रेयसी (२) ॥
इदमप्युपलक्षणम् ।
पुनः पुनः काचन कुर्वती कचच्छटाधिया धूपजधूमसङ्ग्रहम् ।
सखीस्मितैस्तार्किततन्निजभ्रमा बबन्ध तन्मूर्धनि(३) चामरं चिरात् ॥
इति धूमसाम्यमपि बोध्यम् ।
'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे'
इति रहस्यम् ।

---

(१) स्वयंवरे इत्थंभूतां विमानस्थां दमयन्तीं राजानो ददृशुः—इति वाक्यार्थः ।
(२) श्लोकोऽयं ख,गपुस्तकयोर्नास्ति ।
(३) तन्मूर्धज—इति कपु० पाठः ।

ललाटमर्धचन्द्रेण हेमपट्टिकया तथा ॥ ४ ॥

यथा—

केशान्धकारादथ दृश्यभालस्थलार्धचन्द्रा स्फुटमष्टमीयम् ।
एनां यदासाद्य जगज्जयाय मनोभुवा सिद्धिरसाधि साधु ॥

अधस्तादन्धकाराणामुपरिष्टात्कुरङ्गयोः ।
सिन्दूरबिन्दुसुभगा दृष्टा कनकपट्टिका ॥

वल्लीस्मरधनुर्वीचिभृङ्गालीपल्लवैर्भ्रुवौ ॥

यथा—'अथ सुललितयोषिद्भ्रूलताचारुशृङ्ग'मित्यादि ।

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातान्
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्मिन्क्वचिदपि न ते चण्डि ! सादृश्यमस्ति ॥

भ्रूपल्लवं मधुपराजिरुचां निधिस्ते
गण्डस्थली कनकदर्पणदर्पहन्त्री ।
हे कम्बुकण्ठि ! शुककिन्नरहंसवाणि !
प्राणा ममासि मदनस्य च जैत्रमस्त्रम् ॥

चन्द्राऽऽदर्शौ कपोलस्य

सुव्यक्तमव्यवहितश्लोकद्वये । 'पाणौ पद्मधिया मधूककुसुमभ्रान्त्या पुनर्गण्डयो'रित्यादिदर्शनात्तथात्वमपि वर्ण्यते(१) ।

मुखस्येन्द्वब्जदर्पणाः ॥

यथा 'किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुख'मित्यादौ ।

तिलप्रसूनं नासायाः

---

(१) इदमुपलक्षणम्, 'पाणौ'''गण्डयो'रित्यादेस्तथात्वमपि—इति ख पु० पाठः ।

यथा—

बन्धूकद्युतिबान्धवोऽयमधरः स्निग्धो मधूकच्छवि-
र्गण्डश्चण्डि ! चकास्ति नीलनलिनश्रीमोचनं लोचनम् ।
नासाऽभ्येति तिलप्रसूनपदवीं कुन्दाभदन्ति ! प्रिये !
प्रायस्त्वन्मुखसेवया विजयते विश्वं स पुष्पायुधः ॥

कामतूणीकृत्य नासा वर्ण्यते इति श्रीहर्षः(१) । 'नासावंशो मृगीदृशाम्' इत्यप्यस्ति । 'नासानाली तिलोपमा' इत्यपि पठन्ति ।

कण्ठः कम्बोः समः स्मृतः ॥

यथा 'हे कम्बुकण्ठि' इत्यादौ, 'कम्बुग्रीवे ! तद्वदेवाष्टमान्त्ये' इत्यादौ च ।

मृगतन्नेत्रपाथोजतत्पत्रझषखञ्जनैः ॥ ८ ॥
नेत्रं चकोरतन्नेत्रकेतकालिस्मराशुगैः ॥

यथा—

चकोरनेत्रैणदृगुत्पलानां निमेषयन्त्रेण किमेष कृष्टः ।
सारः सुधोद्गारमयः प्रयत्नैर्विधातुमेतन्नयने विधातुः ॥

'हरिणादथ तन्नयनादथ पद्मात्पद्मपत्राच्चे'त्यादि । 'किमब्जे किं मीना'वित्यादि ।

नयने खञ्जनकमले बाहू विलसन्मृणालबिसखण्डे ।
वपुरपि शिरीषपुष्पं मुखमिन्दुस्त्वं शरल्लक्ष्मीः ॥

चकार सा मत्तचकोरनेत्रा विलोलनेत्रभ्रमरैर्गवाक्षान् ।
पूर्णान् दलैः काचन केतकीनामहो ! वधूनां पृथगेव दृष्टिः ॥

---

(१) नासाऽदसीया तिलपुष्पतूणं जगत्त्रयन्यस्तशरत्रयस्य ।
श्वासानिलामोदभरानुमेयां दधद्विबाणीं कुसुमायुधस्य ॥
एतत्पद्याभिप्रायेणोक्तमिदम् ।

केचित्तु—

कोशातकीपुष्पगुलुच्छकान्तिभिर्मुखैर्विनिद्रोल्बणबाणचक्षुषः।
ग्रामीणवध्वस्तमलक्षिता जनैश्चिरं वृतीनामुपरि व्यलोकयन्॥

इति माघदर्शनात् कोशातकीत्वेन मुखं बाणत्वेन नेत्रं वर्ण-
नीयमिति वदन्ति। अन्ये तु—

तया प्रवृद्धाननचन्द्रकान्त्या प्रफुल्लचक्षुःकुमुदः कुमार्या।
प्रसन्नचेतस्सलिलः शिवोऽभूत्संसृज्यमानः शरदेव लोकः॥

इति दर्शनान्नेत्रं कुमुदोपमेयमित्याहुः।

प्रवालबिम्बबन्धूकपल्लवैरधरोष्ठकौ॥ ७॥
वर्ण्यौ माधुर्यमाश्रित्य यावन्मधुरवस्तुभिः॥

यथा—

पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य॥

तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः॥

'बन्धूकद्युतिबान्धवोऽयमधर' इत्यादि। जपाऽप्यत्र गण-
नीयेति(१) गोवर्धनः। माधुर्यमाश्रित्येत्यादि यथा 'त्वं पीयूष!
दिवोऽपि भूषणमसी'त्यादौ।

मुक्तामाणिक्यनारङ्गदाडिमीकुन्दकोरकैः॥ ८॥
ताराभिश्च रदाः

यथा 'कूर्पासेन स्थगिते'त्यादौ, 'तन्वी श्यामा शिखरी'त्यादौ।

---

(१) वर्णनीयेति—इति कपु० पाठः।

तद्दन्ता नागरङ्गानि छोलङ्गानि पयोधरौ ।
ओष्ठाधरौ च बिम्बानि सा मे फलमयी प्रिया ॥
'दमनके'त्यादि, 'बन्धूकद्युती'त्यादि । तत्कोरकैर्यथा—
अधरः किसलयमङ्घ्री पद्मौ कुन्दस्य कोरका दन्ताः ।
कः कौ के कं कौ कान् प्रहसति हसतो हसन्ति हरिणाक्ष्याः ॥
'तारारदाना'मित्यादि ।

**वाणी हंसालिशुककिन्नरैः ॥**
**वेणुकोकिलवीणाभिर्माधुर्यं मधुरैः सह ॥ ९ ॥**

यथा 'हे कम्बुकण्ठि ! शुककिन्नरहंसवाणी'त्यादि ।
तस्य गोप्तुर्द्विरेफाणां कर्णोत्पलनिपातिनाम् ।
स्वरसंवादिभिः कण्ठैः शालिगोप्यो जगुर्गुणान् ॥
कण्ठः किमस्याः पिकवेणुवीणास्तिस्रो जिताः सूचयति त्रिरेखः ।
इत्यन्तरस्तूयत यत्र कापि नलेन बाला कलमालपन्ती ॥
माधुर्यमिति ।

मधुद्रोणीव मन्दारमरन्दाऽमन्दवृष्टिवत् ।
सुधासार इव द्राक्षागोणी वाणी तव प्रिये ! ॥

**बाहुर्बिसेन विद्युद्वाल्लिमृणालैः**

विसमृणालयोरवान्तरभेदविवक्षयोक्तमिदम् । यथा–
अस्या भुजाभ्यां विजिताद्बिसात्किं पृथक्करोऽगृह्यत तत्प्रसूनम् ।
इहेष्यते तन्न गृहाः श्रियः कैर्न गीयते वा कर एव लोकैः ॥
विद्युन्मृणालसुभगा बाहुवल्ली मृगीदृशः ।
यूनां तु कण्ठकाण्डेषु जाता कनकशृङ्खला ॥

**करस्तु पद्मेन ॥**
**पल्लवविद्रुमकाभ्याम्**

यथा—

करकिसलयेन सुदृशा रागसरित्पङ्कजेनेव ।
शिथिलितविद्रुममहसा स्पृष्टोऽहं चेतनामलभे(१) ॥

चन्द्रकलाकुन्दकोरकैश्च नखाः ॥ १० ॥

यथा—

निर्भर्त्सिताशोकदलप्रसूति पाणिद्वयं चारुनखं तदीयम् ।
नवोदितेन्दुप्रतिमस्य शोभां व्योम्नः प्रदोषे विफलीचकार ॥

निर्दोषरत्नसुभगैः कुन्दकोरककान्तिभिः ।
नखैः क्रमलपत्राणि बाला चक्रे पृथक् पृथक् ॥

पूगाब्जतत्कोरकबिल्वतालगुच्छेभकुम्भाद्रिघटेशचक्रैः॥
सौवीरजम्बीरकबीजपूरसमुद्गकन्दुकफलैरुरोजः ॥११॥

यथा—

कनकक्रमुकायितं पुरस्तादथ पङ्केरुहकोरकायमाणम् ।
क्रमशः कलशायमानमास्ते(२)सुदृशो वक्षसि कस्य भागधेयम्॥

कलशीयति कुचकमलं कमलीयति लोचनभ्रमरः ।
अणुकीयति पुनरस्या हरिणदृशः प्रत्यहं मध्यः ॥

स्तनबिल्वद्वयी तस्याः प्रययौ चक्रवाकताम् ।
उड्डीय पुनरद्रीणां जहार विपुलां श्रियम् ॥

चिरप्रवासिंस्तव वाटिकायां बिभर्ति चत्वारि फलानि वीरुत् ।
सौवीरजम्बीरकबीजपूरतालान्यसौ धास्यति(३) किं न जाने ॥

'खगौ वा गुच्छौ वे'त्यादि ।

स्वयम्भूः शम्भुरम्भोजलोचने ! त्वत्पयोधरः ।
नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति ॥

---

(१) चेतनां न लभे—इति क,खपु० पाठः ।

(२) कमलायमानमास्ते–इति कपुस्तके पाठः ।

(३) विधास्यतीत्यर्थे धास्यतीति प्रयोगः,धारयिष्यतीति वाऽर्थः।

'सम्पुटं हाटकीय'मित्यादि, 'दमनकतरुशाखालम्बि छोलङ्ग-युग्म'मित्यादि ।

महतोऽपि महीयांसमणीयांसमणोरपि ।

त्वत्प्रतीकं विदुर्नूनमणुमध्ये ! नगस्तनि ! ॥

**रेखाका(१)शाऽलिसुरश्यामा रोमालिस्तेन तादृशैः ॥**

**शैवालधूमभृङ्गालिलताद्यैरुपमीयते ॥ १२ ॥**

नाभीविलादुच्चलिता भुजङ्गी रोमालिरास्येन्दुसुधां लिलिक्षुः ।

समीक्ष्य केशावलिबर्हिमालामुरोजगिर्योः समलीयताऽन्तः(२)॥

सुगममिदम् ।

**नाभीरसातलाऽऽवर्तह्रदकूपनदादिभिः ॥**

यथा—

मदनसरितमेतां गाहमानो जनोऽसौ

जघनपुलिननाभीमण्डलावर्तरम्याम् ।

मुखकमलसनाथामुल्लसद्भ्रूलतोर्मिं

चिरविरहहुताशाऽऽयासमुज्झाञ्चकार ॥

त्वन्नाभिकूपः पातालं नितम्बस्तव मेदिनी ।

पयोधरस्ते हेमाद्रिस्त्वं ममासि जगत्त्रयम् ॥

ह्रदनदसरांसि नाभिस्त्रिवली तटिनी रसात्मकं च वपुः ।

तदपि तलोदरि ! सम्प्रति (३)कथमिव सन्तापमातनुषे ॥

**वली तटिन्या तद्रूपैः**

तत्समैः पाशादिभिः । तदाह—'त्रिवलीपाशैस्तया तथा नद्धः', 'कामस्य सोपानमिव प्रयुक्त'मिति ।

**पृष्ठं काञ्चनपट्टकैः ॥ १३ ॥**

---

(१) कान्ता—इति कपु० पाठः ।

(२) पद्यमेतत् ख,गपुस्तकयोर्नास्ति ।

(३) सुन्दरि—इति खपु० पाठः ।

यथा—

मुक्तावलिस्ते रदनाः पृष्ठं काञ्चनपट्टकम् ।
नखांशवस्ते रत्नानि मध्ये क्षीणासि किं प्रिये ! ॥

सूच्यग्रतलशून्याऽणुवेदीसिंहादिभिः समः ॥

मुष्टिग्राह्यो भवेन्मध्यः

अत्र मध्यस्याऽतिसूक्ष्मतया तत्प्राधान्येनोपमानता । अत एव मुष्टिग्राह्यता तलप्रमाणता सूक्ष्मत्वादेव मध्ये शून्यता च । अत एव 'सदसत्संशयगोचरोदरी'त्यपि वर्णयन्ति ।

जघनं पुलिनोपमम् ॥ १४ ॥

यथा—'मदनसरितमेता'मित्यादि ।

पीठप्रस्तरभूचक्रैर्नितम्बः परिवर्ण्यते ॥

यथा—

नितम्बः स्वर्णपीठं ते तवाङ्गुल्यश्च पल्लवाः ।
ज्योत्स्नेन्दुपुष्पपीयूषफेनकान्ति स्मितं तव ॥

'तपनीयशिलाशोभा कटि'रित्यादि । 'नितम्बस्तव मेदिनी'त्यादि ।

चक्रेण विश्वं युधि पुष्पकेतुः पितुर्जितं वीक्ष्य सुदर्शनेन ।
जगज्जिगीषत्यमुना नितम्बमयेन किं दुर्लभदर्शनेन ।
विश्रम्य तच्चारुनितम्बचक्रे दूतस्य दृक् तस्य खलु स्खलन्ती ।
स्थिरा चिरादास्त तदूरुरम्भास्तम्भावुपाश्लिष्य करेण गाढम् ॥

इति नैषधात्, 'रथचरणविशालश्रोणिलोलेक्षणेने'ति माघाच्च चक्रान्तरद्वयसाम्यमप्यत्र ।

ऊरुस्तु करिहस्तेन कदल्या करभेण च ॥ १५ ॥

यथा—

कदली कदली करभः करभः करिराजकरः करिराजकरः ।
भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः ॥

चरणः पल्लवाम्भोजस्थलपद्मप्रवालकैः ॥

यथा—

विजितप्रवालपल्लवकवलीकृतप्रोल्लसत्सुषमे ।
पदकमले कमलाया लुठदलकः पातु देवकीसूनुः ॥
अभ्युन्नताङ्गुष्ठनखप्रभाभिर्विक्षेपणाद्रागमिवोद्गिरन्तौ ।
आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम् ॥

पूर्णेन्दुनाङ्गुष्ठनखौ

यथा—

यस्याः पदाङ्गुष्ठनखौ मुखं च बिभर्ति पूर्णेन्दुचतुष्टयं या ।
कलाचतुःषष्टिरुपैतु वासं तस्यां कथं सुभ्रुवि नाम नाऽस्याम् ॥

गमनं हंसहस्तिवत् ॥१६॥

यथा—'गमनमलसयाते'रित्यादि ।

सा राजहंसैरिव सन्नताङ्गी गतेषु लीलाञ्चितविभ्रमेषु ।
व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरशिञ्जितानि ॥

इत्यादौ ।

कटाक्षो यमुनावीचिभृङ्गावलिविषामृतैः ॥

यथा—

हालाहलं वा विलसत्सुधा वा भृङ्गावली वा यमुनोर्मयो वा ।
निशाणघृष्टा मदनेषवो वा यद्वा कटाक्षा हरिणेक्षणायाः ॥

ज्योत्स्नेन्दुपुष्पपीयूषफेनकैरववद्धसः ॥ १७ ॥

हसो हास्यम् । यथा—'ज्योत्स्नेन्दुपुष्पपीयूष' इत्यादि ।

नूनं ते चोरिता तन्वि ! स्मितेक्षणमुखद्युतिः ।
स्नातुमम्भः प्रविष्टायाः कुमुदोत्पलपङ्कजैः ॥

मुक्ताप्यत्र गणनीया। 'मुक्ताफलं वा स्फुटविद्रुमस्थ'मित्यादेः ।
दर्शनं वमदब्जादि

यथा—

धवलयदिव जगदखिलं प्लावयदिव विश्वमेव विशिखौघैः(१)।
वमदिव कमलसहस्रं लोचनमेणीदृशो जयति ॥

श्वासस्तु सुरभिः शनैः ॥

वहन्ति प्रातरम्भोजसौरभोद्गारवासिताः ।
मन्दमन्दममी वाता निश्वासास्तावका इव ॥

हंससारसशब्दाभ्यां वर्ण्यते नूपुरध्वनिः ॥ १८ ॥

यथा—'सा राजहंसैरिवे'त्यादि ।

लीलाचलत्स्त्रीचरणारुणोत्पलस्फुरत्तुलाकोटिनिनादकोमलः ।
शौरेरुपानूपमपाहरन्मनः स्वरान्तरादुन्मदसारसाऽऽरवः ॥

अत्र श्रीपादानुसारिकविकल्पलताकार एतावदधिकमाह—

वेण्याः सर्पाऽसिभृङ्गाल्यो धम्मिल्लस्य विधुन्तुदः ।
सीमन्तस्याध्वदण्डौ च भ्रुवोः सर्पकृपाणकौ ॥
दन्तस्य जीरका ज्ञेया मदिरा कुमुदं दृशोः ।
जिह्वायास्त्वञ्चलो दोला नासायाः पाटली तथा ॥
वल्लरी लहरी पाशः शाखा बाहुद्वयस्य च ।
प्रवालशाखा वाङ्गुल्याः पल्लवश्च नखस्य तु ॥
रक्तपुष्पाणि, नाभ्यास्तु विवराम्भोरुहे समे ।
वीचिसोपाननिःश्रेण्यस्त्रिवल्या इति च स्त्रियाम् ॥
पुंसां तु वृषरक्ताक्षस्कन्धौ स्कन्धस्य सन्निभौ ।
भुजौ वज्रस्य गमनमुक्षणावित्यभिकीर्तितम् ॥

---

(१) विधेः—इति गपु० पाठः ।

गोवर्धनस्तु शरीरतदवयवयोर्वर्णनीयान्गुणानाह(१)—

सौन्दर्यं मृदुता कार्श्यमतिकोमलता तथा ।
कान्तिरौज्ज्वल्यमाव(२)ल्यमित्येते वपुषो गुणाः ॥
केशस्य दीर्घकौटिल्यमृदुनैबिड्यनीलताः ।
कपोले स्वच्छता कण्ठे द्राघीयस्त्वं त्रिरेखता ॥
नेत्रे स्नैग्ध्यं विशालत्वं लोलताऽपाङ्गदीर्घता ।
नीलता प्रान्तलौहित्यं श्वैत्यं निविडपक्ष्मता ॥
अधरेऽत्यन्तमाधुर्यमुच्छ्वस(३)त्वं सुरक्तता ।
दन्तस्य श्वैत्यलौहित्यं द्वात्रिंशत्ताऽतिदीप्तता ॥
माधुर्यं स्पष्टता वाचां मृदुता समता भुजे ।
करेऽतिमृदुता शैत्यं सर्वभागे च शोणता ॥
स्तने श्यामाग्रतौन्नत्यविस्तारदृढपाण्डुताः ।
रोमाल्यां मार्दवं सौक्ष्म्यं श्यामता नाभिगामिता ॥
कान्तिर्वृत्तानुपूर्वत्वं जङ्घयोर्नातिदीर्घता ।
अत्यन्तमन्दता शैत्यं निश्वासे तु सुगन्धिता ॥

इत्यादि ।

मया संक्षेपशीलेन गच्छता मृदुवर्त्मनि ।
सर्वेषामविरोधेन (४)दिङ्मात्रमिह दर्शितम् ॥

इत्यलङ्कारशेखरे वर्णकरत्ने योषिद्वर्णनमरीचिः ।

---

(१) वर्णनीयान्याह–इति गपु० पाठः ।
(२) माधुर्य–इति गपु० पाठः ।
(३) मुच्छूनत्वं–इति ख,गपु० पाठः ।
(४) सर्वशिष्टानुरोधेन–इति ख,गपु० पाठः ।

इदानीं पुरुषवर्णनमाह—

राज्ञामत्यन्तपीनत्वमुच्चता दीर्घबाहुता ॥

अत्र पुंसामिति वक्तव्ये प्रायशः कवीनां राजान एव वर्णनीया भवन्तीतिताननुगृह्णता महर्षिणा राज्ञामित्युक्तम् । यथा—

'व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः'

इत्यादौ ।

युगार्गलभुजङ्गेन्द्रदण्डस्तम्भेभहस्तकैः ॥ १ ॥

बाहुः

यथा–'युवा युगव्यायतबाहु'रित्यादि । 'भुजे भुजङ्गेन्द्रसमानसारे' इत्यादौ ।

अमुष्य दोर्भ्यामरिदुर्गलुण्ठने ध्रुवं गृहीताऽर्गलदीर्घपीनता ।
उरःश्रिया तत्र च गोपुरस्फुरत्कपाटदुर्धर्षतिरःप्रसारिता ॥

नागेन्द्रगमनः पीनमैरावतकरायतम् ।
दोर्दण्डं भुवनागारस्तम्भं राजा ममर्श सः ॥

वक्षः कपाटेन शिलापट्टेन वर्ण्यते ॥

(१)यथा—

तस्याभवत्सूनुरुदारशीलः शिलः शिलापट्टविशालवक्षाः ।
जितारिपक्षोऽपि शिलीमुखैर्यः शालीनतामव्रजदीड्यमानः ॥

अंसे विपुलता

यथा–'युवा युगव्यायतबाहुरंसल' इत्यादि ।

मध्ये कार्श्यम्

(१) इत आरभ्य 'अंसे विपुलता'–इत्यन्तः पाठः कपुस्तके न दृश्यते ।

यथा—

अवन्तिनाथोऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः ।
आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति ॥

इत्यादि ।

उन्नतता पदे ॥ २ ॥

यथा—

कूर्माकारं चरणयुगलं धूतदिग्दन्तिशुण्डा-
दण्डावूरू भुजयुगमपि व्यक्तनागेन्द्रशोभम् ।
प्रायः पृथ्वीधरणविषये तत्समर्थान् पदार्था-
नेकीकृत्य त्रिभुवनसृजा निर्मिता यस्य मूर्तिः ॥

स्तनयोरिव नारीणामत्यन्तस्वच्छता हृदि ॥

यथा—

सा निर्मले तस्य मधूकमाला हृदि स्थिता च प्रतिबिम्बिता च ।
कियत्समग्ना कियती च मग्ना पञ्चेषुबाणालिरिव व्यलोकि ॥

नारीस्तनस्वच्छता यथा—

प्रतिफलितं गलगरलं कज्जलबुद्ध्या पयोधरे देव्याः ।
प्रातः प्रोञ्छितुमिच्छन् गिरिजाहसितो हरो जयति ॥

कान्तिप्रयोजकं यावत् तावत्तद्वत्प्रवर्ण्यते ॥ ३ ॥

तद्वद्योषिद्वत् । यथा–

कृतावरोहस्य हयादुपानहौ ततः पदे रेजतुरस्य बिभ्रती ।
तयोः प्रवालैर्वनयोस्तथाम्बुजैर्नियोद्धुकामे किमु बद्धवर्मणी ॥

धातुताम्राधरः प्रांशुर्देवदारुबृहद्भुजः ।
प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिव ॥

चन्द्रानन! चन्द्रदिनं मृगलोचन! मृगशिरश्च नक्षत्रम्।
तिथिरतिथिप्रिय! नवमी शुभयोगः सुभग! भाति भवान्(१)॥

कामं कमलपत्राणां नेत्रे तस्यानुकारिणी।

इत्यादि विस्तृतमन्यत्र। इदमुपलक्षणम्। आह्लादकत्वपुरस्कारेण चन्द्रादिसाम्यमुभयोरपि। यथा- 'इत्थं द्विजेन द्विजराजकान्ति'रित्यादि 'इन्दुप्रभामिन्दुमतीं बभाषे' इति रघुवंशे, 'स्फुरत्कमलप्रभे' इति श्रुतबोधे।

प्रतापोऽर्काग्नि(२)वज्राद्यैः कीर्तिश्चन्द्रादिशुभ्रकैः॥
करे पद्मोर्ध्वरेखादि पदे छत्रध्वजादिकम्॥ ४॥
गमनं हस्तिसिंहाभ्यां कार्कश्यं च भुजादिषु॥

स्फुटमिहोदाहणम्। गमनं यथा--

पूर्वं यथा देवपतेर्नियोगं मूर्ध्ना वहन्कार्मुकबाणहस्तः।
प्राप्तस्तथैवाशु गजेन्द्रगामी प्रोद्विग्नमानो नवयौवनेन॥

'ततो मृगेन्द्रस्य मृगेन्द्रगामी'त्यादि।

स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः।
सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः॥

आदिपदादृषभोऽपि।

कर्तव्या रत्नसिंहाद्या नरराजादितः पदात्।
विशेष्यभावो ग्रुसदां नरभूमि(३)विशेषणात्॥
यद्यत्सामुद्रिकाद्युक्तं तद्वर्ण्यमुभयोरपि।
किन्तु शिष्टप्रयोगोऽत्र नियामकतयेष्यते(४)॥

इत्यलङ्कारशेखरे वर्णकरत्ने पुरुषवर्णनमरीचिः।

---

(१) इदमुत्तरार्धं क, गपुस्तकयोर्नास्ति।
(२) प्रतापोऽग्न्यादि-इति कपु० पाठः।
(३) वरभूमि-इति खपुस्तके पाठः।
(४) मया कल्पतयेष्यते—इति कपु० पाठः।

इदानीं सादृश्यप्रापकप्रकारानाह–

इवाद्यैः प्रतिमानाद्यैः समानाद्यैर्निभादिभिः ॥
बन्धुचौरारिवंशाद्यैः सादृश्यप्रतिपत्तयः ॥ १ ॥

इवाद्यैरिति । तदाहुः—

इववद्वायथाशब्दाः समाननिभसंनिभाः ।
तुल्यसङ्काशनीकाशप्रतिमाप्रतिरूपकाः ॥
सदृक्सदृशसंवादिशब्दाः सादृश्यवाचकाः ।

प्रतिमानाद्यैरिति ।

प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ।
प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात् ॥

समानाद्यैर्निभादिभिरिति ।

वाच्यलिङ्गाः समानश्च सदृक्षः सदृशः सदृक् ।
साधारणः समस्तुल्यः स्युरुत्तरपदे त्वमी ॥
निभसङ्काशनीकाशप्रतीकाशोपमादयः ।

बन्ध्विति ।

बन्धुर्मित्रं वयस्यश्च प्रेयान् प्रीतः सुहृत् सखा ।

उपमानोपमेययोरेवम् । चौरेति ।

प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः ।

'मुखकान्तिचौरश्चन्द्र' इत्यादि कर्तव्यम् । अरीति ।

रिपुवैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ।
द्विड्विपक्षाऽहिताऽमित्रदस्युशात्रवशत्रवः ॥
अभिघातिपराऽरातिप्रत्यर्थिपरिपन्थिनः ।

'चन्द्रस्य वैरि मुख'मित्यादि कर्तव्यम् । वंशाद्यैरिति ।

सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ ।
वंशोऽन्ववायः सन्तानः सपिण्डास्तु सनाभयः ॥

समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ।
सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥
'चन्द्रसगोत्रं, चन्द्रसोदरं मुख'मित्यादि कर्तव्यम् ।
प्रकारान्तरमाह--
भृतकाद्यैश्च भृत्याद्यैर्न्यक्कारार्थैः क्रियापदैः ॥
सन्देहतत्तद्वाक्याद्यैः साद्दश्यं प्रतिपद्यते ॥ २ ॥
भृतकाद्यैरिति ।
भृतको भृतिभुक् कर्मकरो वैतानिकश्च सः ।
'मुखस्य भृतकश्चन्द्र' इत्यादि कर्तव्यम् (१) । भृत्याद्यैरित्यादि ।
भृत्यदासेयदासेरदासगोप्यकचेटकाः ।
नियोज्यकिंकरप्रेष्यभुजिष्यपरिचारकाः ॥
'मुखस्यदासः शशी'त्यादि कर्तव्यम् । न्यक्कारार्थैरिति ।
न्यक्करोति तिरस्कुर्वन् प्रतिक्षिपति भर्त्सति ।
आक्रोशत्यवजानाति कदर्थयति निन्दति ॥
विडम्बयति संरुन्धे हसतीर्ष्यत्यसूयति ।
'त्वन्मुखं चन्द्रं न्यक्करोती'ति विधेयम्(२) ।
तृणीकृतमधिक्षिप्तं निरस्तं च लघूकृतम् ।
अनादृतमवज्ञातमम्भोजं त्वन्मुखेन्दुना ॥
सन्देहेति । यथा--'किमिन्दुः किं पद्म'मित्यादि । तत्तद्वाक्यैरिति ।
तस्य पुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ।
तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ॥
तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते ।

(१) इत्यपि बोद्धव्यम्-- इति कपु० पाठः ।
(२) ध्येयम्--इति कपुस्तके ।

तमर्थमनुबध्नाति तच्छीलं तन्निषेधति ॥
तस्य चानुकरोतीति तमर्थमनुवि(१)न्दति ।
आकारयत्याह्वयते जिगीषति सरोरुहम् ॥
विधिरम्भोजसाम्राज्ये मुखेन्दुमभिषिञ्चति ।
तस्या मुखेन सदृशं कश्चन्द्रं कर्तुमिच्छति(२) ॥
भवतन्दुर्न दासोऽपि त्वदास्यं चेत् किमिन्दुना ।
चन्द्रमूर्ध्नि पदं धत्ते वृथा चन्द्रस्तपस्यति(३) ॥
लीयते चन्द्रमाः क्वापि बिभेति च पलायते ।

दण्डी तु—

प्रतिच्छन्दसरूपादिसजातीयाऽनुवादिनः ।
सलक्षणसपक्षाभसवर्णतुलितादिकम् ॥
कल्पदेशीयदेश्यादि ये चान्यूनार्थवाचिनः ।
समासश्च बहुव्रीहिः शशाङ्कवदनादिषु ॥
भवन्तीवादिशब्दाश्च सादृश्यप्रतिपत्तये ।

इत्याह ।

कवीनां घटनाऽन्यैव चराचरविलक्षणा ।
अकर्तुमन्यथाकर्तुं कर्तुं या क्षमते जगत् ॥

इति श्रीमाणिक्यचन्द्रकारिते अलङ्कारशेखरे
वर्णकरत्ने सादृश्यवर्णनमरीचिः ।



---

(१) धावति–इति खपु० पाठः ।
(२) कः कर्तुं चन्द्रमीश्वरः–इति खपुस्तके ।
(३) चन्द्र प्रतप्स्यसि–इति कपुस्तके, चन्द्र तपस्यति–इति च खपुस्तके पाठौ दृश्येते । तौ च दूषितत्वादसङ्गतत्वाच्च न शोभनीयौ ।

षष्ठं रत्नम् ।

इदानीं कविसम्प्रदायस्य सर्वापेक्षयाभ्यर्हितत्वं दर्शयन्नाह—

असतोऽपि निबन्धेन सतामप्यनिबन्धनात् ॥
नियमस्य पुरस्कारात् सम्प्रदायस्त्रिधा कवेः ॥ १ ॥

असतोऽपीति । वस्तुगत्या यन्न भवति तदपि कविभिर्निबध्यते । यथा—

रत्नानि यत्र तत्राद्रौ हंसाद्यल्पजलाशये ।
जलेभाद्यं नभोनद्यामम्भोजाद्यं नदेष्वपि ॥
तिमिरस्य तथा मुष्टिग्राह्यत्वं सूचिभेद्यता ।
शुक्लत्वं कीर्तिपुण्यादौ कार्ष्ण्यं चाकीर्त्यघादिषु ॥
प्रतापे रक्ततोष्णत्वे रक्तत्वं क्रोधरागयोः ।
ज्योत्स्नापानं चकोराणां प्रवालं सर्ववीरुधाम् (१)॥
केसराशोकयोः सत्स्त्रीगण्डूषात् पादघाततः ।
मासान्तरेऽपि पुष्पाणि रोमालिस्त्रिवलिः स्त्रियाम् ॥

सतामपीति । पारमार्थिकमपि न निबद्ध्यते । यथा—

वसन्ते मालतीपुष्पं फलपुष्पे च चन्दने ।
कामिदन्तेषु कुन्दानां कुड्मलेषु च रक्तता ॥
नारीणां श्यामता पातः स्तनयोर्यच्च (२) वा ह्रिये ।

नियमस्येति ।

हिमवत्येव भूर्जत्वक् चन्दनं मलये परम् ।
हेमन्तशिशिरौ त्यक्त्वा सर्वदा कमलस्थितिः ॥

---

(१) शैवालं सर्ववारिषु–इति खपु० पाठः ।
(२) नम्रता तथा–इति कपुस्तके ।

किंच(१)—

सामान्यग्रहणे शौक्ल्यं पुष्पाम्भश्छत्रवाससाम् ।
ध्वजचामरहंसानां हारस्य बकभस्मनोः ॥
कृष्णत्वं सर्ववृक्षाहि(२)मेघवारिधिवीरुधाम् ।
भिल्लकाचासुराणां च धूमपङ्कशिरोरुहाम् ॥
लौहित्यं धातुमाणिक्यजपारक्तविवस्वताम् ।
पद्मपल्लवबन्धूकदाडिमीक्रूरजादिषु ॥
पीतत्वं शालिमण्डूकवल्कलेषु परागके ।
वर्षास्वेव शिखिमौढिर्मधावेव पिकध्वनिः ॥

अन्यच्च—

कमलासम्पदोः कृष्णहरितोर्नागसर्पयोः ।
पीतलोहितयोः स्वर्णपरागाग्निशिखासु च ॥
चन्द्रे शशैणयोः कामध्वजे मकरमत्स्ययोः ।
दानवासुरदैत्यानामैक्यमेवाभिसंहितम् ॥

अपिच—

चिरन्तनस्यापि तथा शिवचन्द्रस्य बालता ।
मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः ॥
भुवनानि निबध्नीयात् त्रीणि सप्त चतुर्दश ।
चतस्रोऽष्टौ दश दिशश्चतुरः सप्त वारिधीन्(३) ॥
अष्टादश स्मृता विद्याश्चतस्रश्च चतुर्दश ।
ये स्थले ते जले जीवा भिन्दन्त्यर्कं रणे मृताः ॥
महत्त्वमादौ सर्गान्ते सूक्ष्मता जगतामपि ।

---

(१) किंच-इति खपुस्तके नास्ति ।
(२) शैलवृक्षादि-इति खपुस्तके ।
(३) 'चतस्रोऽष्टा'वित्यादि पद्यं घपुस्तके नास्ति ।

शैलादिर्भिद्यते शब्दान्नभः (१) शतधनूपरि ? ॥
नाम तत्तदुपाधौ स्याच्छङ्करो वृषवाहनः ।
चिह्नत्वेन वृषाङ्कोऽयं ध्वजे सत्वाद्वृषध्वजः ॥
शूली न सर्पी गिरिशः शशी न हरिणी विधुः ।
इन्दुमौलिर्महादेवो गङ्गामौलिर्नतु क्वचित् ॥
रलयोर्डलयोश्चैव बवयोः सशयोर्न भित् ।
नानुस्वारविसर्गौ च चित्रभङ्गाय सम्मतौ ॥
इवबद्धाहिहींहस्मउतवैतुकिलैवच ।
पदान्येतानि देयानि पादस्याग्रे न जातुचित् ॥
भूतेन्द्रभारतेशात्प्राक् महच्छब्दो निरर्थकः ।
दुरर्थो ब्राह्मणे वृष्टिभोज्यौषधपथादिषु ॥

इत्यलङ्कारशेखरे कविसम्प्रदायरत्ने नियममरीचिः ।

---

अथ संक्षेपेण वर्णनीयमाह—

वर्ण्यश्च राजा देवी च देशो ग्रामः पुरी सरित् ॥
सरोऽब्ध्यरण्योद्यानाद्रिप्रयाणरणवाजिनः ॥ १ ॥
हस्त्यर्कचन्द्राघृतवो विवाहोऽथ स्वयंवरः ॥
सुरापुष्पाम्बुसम्भोगविश्लेषमृगयाऽऽश्रमाः ॥ २ ॥
काला(२) ऋतुवयःसन्धी ध्वान्तवृक्षाभिसारिकाः ॥

एषां विशिष्य वर्णनप्रकाराः (३) प्रदर्श्यन्ते—

नृपे कीर्तिप्रतापाऽऽज्ञादुष्टशान्तिविवेकिताः ।
धर्मप्रयाणसंग्रामशस्त्राभ्यासनयक्षमाः ॥

---

(१) नभःपूर्तिरथोद्गमम्-इति कपु० पाठश्चिन्त्यः ।,
(२) कालान्तरं-इति कपु०, कलाऋतु-इति च खपु० पाठः ।
(३) वर्णनमाह-इति कपु० पाठः ।

प्रजापालोऽरिशैलादिनिवासो (१) रिपुशून्यता ।
औदार्यधैर्यगा(२)म्भीर्यैश्वर्यस्थैर्योद्यमादयः ॥
देव्यां सौभाग्यलावण्यशीलशृङ्गारमन्मथाः ।
त्रपाचातुर्यदाक्षिण्यप्रेममानव्रतादयः ॥
देशे बहुखनिद्रव्यपण्य(३)धान्यकरोद्भवाः ।
दुर्गग्रामजनाधिक्यनदीमातृकतादयः ॥
ग्रामे धान्यलतावृक्षसरसीपशुपुष्टयः ।
क्षेत्रादिह(४)ट्टकेदारग्रामस्त्रीमुग्धविभ्रमाः ॥
पुरेऽट्टपरिखावप्रप्रतोलीतोरणध्वजाः ।
प्रासादाध्वप्रपाऽऽरामा वापी वेश्या सती नदी ॥
सरित्यम्बुधियायित्वं वीच्यो वनगजादयः ।
पद्मानि षट्पदा हंसनक्राद्याः (५) कूलशाखिनः ॥
सरस्यम्भोलहर्यम्भोगजाद्यम्बुजषट्पदाः ।
हंसचक्रादयस्तीरोद्यानस्त्रीपान्थकेलयः ॥
अब्धौ द्वीपाद्रिरत्नोर्मिपोतयादोजलप्लवाः ।
विष्णुः कुल्यागमश्चन्द्राद्वृद्धिरौर्वोऽब्द(६)पूरणम् ॥
अरण्येऽहिवराहेभयूथसिंहादयो द्रुमाः ।
काकोलूककपोताद्या भिल्लभल्लूदवादयः ॥
उद्याने सरणिः सर्वफलपुष्पलतादयः ।

---

(१) शैलादिवासोऽरिपुरशून्यता—इति ख,ग,घपु० पाठः ।
(२) गाम्भीर्यशौर्यैश्वर्यो—इति ख,ग,घपुस्तकेषु ।
(३) पशुधान्य—इति खपु० पाठः ।
(४) रुद्र—इति कपु०, घट्ट—इति घपु० पाठः ।
(५) चक्राद्याकुलशाखिनः—इति कपु० पाठः ।
(६) रौर्वौघ—इति कपुस्तके ।

पिकालिके(१)किहंमाद्याः क्रीडास्याद्यगस्थितिः ॥
शैले मेघौषधी(२) धातुवंशकिन्नरनिर्झराः ।
शृङ्गपादगुहारत्नवनजीवाद्युपत्यकाः ॥
प्रयाणे भेरिनिस्वानभूकम्पबलधूलयः ।
कर(३)भोक्षध्व(४)जच्छत्रवणिक्शकटवेसराः ॥
युद्धे तु वर्मतल्वा(५)ररजांसि तूर्य-
निर्घातनादशरमण्डपरक्तनद्यः ।
छिन्नातपत्ररथचामरकेतुकुम्भि—
योधाः सुरीवृतभटाः सुरपुष्पवृष्टिः ॥
अश्वे वेगित्वमौन्नत्यं तेजः सल्लक्षणस्थितिः ।
खुरोत्खातरजःप्रौढिजातिर्गतिविचित्रता ॥
गजे सहस्रयोधित्वमुच्चता कर्णचापलम् ।
अरिव्यूहविभेदित्वं कुम्भमुक्तामदालयः ॥
सूर्येऽरुणता रविमणिचक्राम्बुजपथिकलोचनप्रीतिः ।
तारेन्दुदीपकौषधि(६)घूकतमश्चौरकुमुदकुलटार्तिः ॥
चन्द्रे कुलटाचक्राम्बुजचौरविरहितमोऽर्तिरौज्ज्वल्यम् ।
जलधिजननेत्रकैरवचकोरचन्द्राश्मदम्पतिप्रीतिः(७) ॥

---

(१) केलि—इति क,ख,गपु० पाठः ।
(२) महौषधी—इति खपु० पाठः ।
(३) परक्षोभगज—इति ग,घपु० पाठः ।
(४) गज—इति खपुस्तके ।
(५) चार—इति खपु०, चर्मतलवार—इति घपु० पाठः ।
(६) षध्युलूकतम—इति कपुस्तके पाठः ।
(७) जलनिधिजननेत्रकैरवचकोरचन्द्रास्पदं प्रतिप्रीतिः—इति कपु० पाठः ।

सुरभौ दोलाकोकिलदक्षिणवातद्रुपल्लवोद्भेदाः ।
जातीतरपुष्पचयाऽऽम्र(१)मञ्जरीभ्रमरझङ्काराः ॥
ग्रीष्मे पाटलमल्लीतापसरःपथिकशोषवातोल्काः ।
सक्तुप्रपाप्रपास्त्रीमृगतृष्णाम्रादिफलपाकाः ॥
वर्षासु घनशिखिस्मयहंसगमाः पङ्ककन्दलोद्भेदौ ।
जातीकदम्बकेतकझञ्झानिलनिम्नगाहलिप्रीतिः ॥
शरदीन्दुरविपटुत्वं जलाच्छताऽगस्त्यहंसवृषदर्पाः ।
सप्तच्छदाः (२)सिताभ्राब्जरुचिः शिखिपक्षमदपाताः ॥
हेमन्ते दिनलघुता मरुवकयववृद्धि(३)शीतसम्पत्तिः ।
शिशिरे कुन्दसमृद्धिः कमलहतिर्वा गुडामोदाः ॥
विवाहे स्नानशुद्धाङ्गभूषा(४)तूर्यत्रयीरवाः ।
वेदीसङ्गीतहोमा(५)दिलाजमङ्गलवर्णनम् ॥
स्वयंवरे शचीरक्षा मञ्चमण्डपसज्ज(६)ता ।
राजपुत्रीनृपाकारान्वयचेष्टाप्रकाशनम् ॥
सुरापाने विकलता स्खलनं वचने गतौ ।
लज्जामानच्युतिः प्रेमाधिक्यं रक्ताक्षता भ्रमः ॥
पुष्पावचये पुष्पावचयः पुष्पार्पणार्थने दयिते ।
मालागोत्रस्खलने क्रोधो वक्रोक्तिसंभ्रमाश्लेषाः ॥
जलकेलौ सरःक्षोभश्चक्रहंसापसर्पणम् ।

---

(१) द्रुममञ्जरी–इति क,घ,पु० पाठः ।
(२) सप्तच्छदासिताभ्राब्ज—इति क,ख,गपु० पाठो विचार्यः ।
(३) वृद्धि–इति क,घपुस्तकयोर्नास्ति ।
(४) भूषोल्लू—इति ग,घपु० पाठः ।
(५) रामादि—इति कपु० पाठः ।
(६) सज्जनाः–इति खपु० पाठः ।

पद्मम्लानिः पयःक्षेपोऽक्षिरागो भूषणच्युतिः ॥
सुरते सात्विका भावाः सीत्काराः कुड्मलाक्षता ।
काञ्चीकङ्कणमञ्जीररवो र(१)दनखक्षते ॥
विरहे तापनिश्वासचिन्तामौनकृशाङ्गताः ।
अब्दसंख्या निशादैर्घ्यं जागरः शिशिरोष्णता ॥
मृगयायां च संचारो (२) वागुरा नीलवेषता ।
मृगाधिक्यं मृगत्रासो हिंस्रद्रोहो गतित्वरा ॥
आश्रमेऽतिथिपूजैणविश्वासो हिंस्रशान्तता ।
यज्ञधूमो मुनिसुता द्रुसेको वल्कलं द्रुमाः ॥
पद्मकोशोत्सवः(३) प्रातर्मध्याह्ने तापसंप्लवः ।
सायं सूर्येऽतिलौहित्यं चक्रपद्मादिविप्लवः ॥
पूर्वत्वंग्रेतनत्वोश्च सन्धिं व्याप्योपवर्णनम् ।
एवं शैशवतारुण्यमाध्यस्थ्यं विषमं च तत् ॥
अन्धकारेऽतिकाठिन्यं विश्वलोपसमर्थता ।
आकस्मिकसमारम्भो निःशङ्कमभिसारि(४)ता ॥
वृक्षे प्रचुरशाखत्वं दलाऽदर्शितसूर्यता ।
उच्चता प्रसवोत्कर्षो वयःपथिकसेव्यता ॥
अभिसारे भयभ्रंशो मञ्जीरादितिरस्क्रिया ।
साहसं रागितोत्कर्षाः कालानुगुणवस्त्रता ॥

इत्यलङ्कारशेखरे कविसम्प्रदायरत्ने वर्णनीयमरीचिः ।

---

नियमान्तरमाह—

श्वेताश्चन्द्राद्यो ज्ञेया नीलाः श्रीकेशवादयः ॥
शोणास्तु क्षात्रधर्माद्याः पीता दीपशिखादयः ॥ १ ॥

---

( १ ) ऽधर–इति खपु० पाठः । ( २ ) श्वसंचारो इति–गपु० पाठः ।
( ३ ) पद्मकेकोत्सवः—इति क,ख,गपु० पाठः ।
( ४ ) सारिकाः–इति क,घपु० पाठः ।

धूसरा अ(१)थ धूल्याद्या ज्ञातव्याः काव्यवर्त्मनि ॥

अत्रैवं ज्ञातव्यम्—

श्वेतानि चन्द्रशक्राश्वशम्भुनारदभार्गवाः ।
हली शेषाहिशक्रेभौ सिंहसौधशरद्धनाः ॥
सूर्येन्दुकान्तनिर्मोकमन्दारद्रुहिमाद्रयः ।
हिमहासमृणालानि स्वर्गङ्गेभ(२)रदाभ्रकम् ॥
सिकताऽमृतलोध्राणि गुणकैरवशर्कराः ।
नीलानि कृष्णचन्द्राङ्कव्यासरामधनञ्जयाः ॥
शनिर्द्रुपदजा काली राजपट्टं विदूरजम् ।
विषाऽऽकाश(३)कुहूशस्त्राऽगुरुपापतमोनिशाः ॥
रसावद्भुतशृङ्गारौ मद(४)तापिच्छराहवः ।
सीरिचीरं यमो रक्षः कण्ठः खञ्जनकेकिनोः ॥
कृशा छाया गजाङ्गारखलान्तःकरणादयः ।
शोणानि क्षात्रधर्मश्च त्रेता रौद्ररसस्तथा ॥
चकोरकोकिलापारावतनेत्रं कपेर्मुखम् ।
तेजः सारसमस्तं(५) च भौमकुङ्कुमतक्षकाः ॥
जिह्वेन्द्रगोपखद्योतविद्युत्कुञ्जरबिन्दवः ।
पीतानि दीपजीवेन्द्रगरुडेश्वरहृ(६)ग्जटाः ॥
ब्रह्मा वीररसस्वर्णक(७)पिद्रापररोचनाः ।
किञ्जल्कचक्रवाकाद्या हरितालं मनःशिला ॥

---

(१) रथ—इति खपुस्तके ।
(२) स्वर्दण्डेभ—इति क, गपु०, स्वदन्तैभ—इति च घपु० पाठः ।
(३) विषकाश—इति घपुस्तके ।
(४) तथा पिच्छं च—इति कपु० पाठः ।
(५) पूषणमस्तं—इति कपु० पाठः ।
(६) सज्जटाः—इति कपुस्तके । (७) कलि—इति गपु० पाठः ।

धूसराणि रजो लूता करभो गृहगोधिका।
कपोतमूषकौ दुर्गा काककण्ठखरादयः॥

इदमुपलक्षणम्—

हरिताः सूर्यतुरगा बुधो मरकतादयः।

इत्यपि बोद्धव्यम्।

द्वैरूप्ये चाऽप्रसिद्धौ च नियमोऽयमुदाहृतः।
अन्यद्वस्तु यथा यत्स्यात् तत्तथैवोपवर्ण्यते॥

इत्यलङ्कारशेखरे कविसम्प्रदायरत्ने
शुक्लादिनियममरीचिः।

---

इदानीं नियमान्तरमाह—

एकस्मादासहस्रं च यद्यद्वस्तु यथा भवेत्॥
तत्तत् कविप्रयोगेण ज्ञातव्यं काव्यमिच्छता॥१॥

अत्र ज्ञातव्यम्—

एक ऐन्द्रः करी चाश्वो गजास्यरदशुक्रदृक्।
द्वयं पक्षनदीतीरनरश्रुतिभुजादिकम्॥
त्रयं कालाग्निभुवनगङ्गामार्गेशदृग्गुणाः।
ग्रीवारेखा महीकोणास्तथा शूलशिखावली॥
सन्ध्या पुरः पुष्कराणि रामविष्णुज्वराऽङ्घ्रयः
चत्वारि वेदब्रह्मास्यवर्णाऽब्धिहरिबाहवः॥
स्वर्दन्तिदन्तसेनाङ्गोपाययामयुगाश्रमाः।
पञ्च पाण्डवरुद्रास्येन्द्रियस्वर्द्रुव्रता(१)दयः॥
महाभूतमहापापमहाकाव्यमहामखाः।
पुराणलक्षणं प्राणानिला वर्गेन्द्रियार्थकाः॥
षड् वज्रकोणत्रिशिरोनेत्रतर्काङ्गदर्शनम्।
चक्रवर्ती महासेनवदनानि गुणा रसाः॥

---

(१) व्रताग्नयः—इति खपु० पाठः।

सप्त पातालभुवनमुनिद्वीपार्कवाजिनः ।
वाराश्च स्वरराज्याङ्गत्रीहिवह्निशिखादयः ॥
अष्टौ योगाङ्गवस्त्रीशमूर्तिदिग्गजसिद्धयः ।
ब्रह्मश्रुतिव्याकरणदिक्पालाऽहिकुलाद्रयः ॥
नवाङ्गद्वारभूखण्डकुत्सरावणमस्तकाः ।
व्याघ्रीस्तनसुधाख(१)ण्डशेत्रध्य(२)ङ्करसग्रहाः ॥
दश हस्ताङ्गुलीशम्भुवाहुरावणमौलयः ।
कृष्णावतारो दिग्विश्वेदेवाऽवस्थेन्दुवाजिनः ॥
एकादश महादेवाः सेनाश्च कुरुभूपतेः ।
द्वादशार्का राशिमाससंक्रान्तिगुहबाहवः ॥
शारिकोष्ठकसेनानीनेत्रक्ष्मापतिमण्डलाः ।
त्रयोदश स्युस्ताम्बूलगुणा अथ चतुर्दश ।
विद्यान्वयमनु(३)स्वाराड्भुवनभुवतारकाः ॥
तिथयः स्युः पञ्चदश षोडशेन्दुकलाऽम्बि(४)काः ।
अष्टादश द्वीपविद्यापुराणस्मृतिधान्यकम् ॥
विंशती रावणभुजा(५)नेत्राद्यथ शतं तथा ।
धार्तराष्ट्राः शतभिषक्तारकाः पुरुषायुषम् ॥
रावणाङ्गुलयब्जदलशक्रयज्ञाब्धियोजनम् ।
सहस्रं जाह्नवीवक्त्रशेषशीर्षाम्बुजच्छदाः ॥
रविर(६)श्म्यर्जुनकरवेदशाखेन्द्रदृष्टयः ।
उदाहरणमेतेषां प्रसिद्धत्वान्न लिख्यते ।
प्रहते केवलं पान्था मादृशाः काव्यवर्त्मनि ॥

इति श्रीमाणिक्यचन्द्रकारिते अलङ्कारशेखरे
कविसम्प्रदायरत्ने सङ्ख्यानियममरीचिः ।

---

(१) कुण्ड—इति क.घपु० पाठः । (२) शृङ्गारादि—इति कपु० पाठः ।
(३) स्वराश्चैव—इति कपु० पाठः । (४) कलाः स्मृताः इति कपुस्तके ।
(५) भुजाङ्गुलयोऽथ—इति क,घपु० पाठः ।
(६) बाणार्जुन—इति ख,घपु० पाठः ।

## सप्तमं रत्नम् ।

इदानीं प्रकारमुपदिशन्नेव कवीनां प्रकर्षबीजमाह—

गतागतसमत्वं च संस्कृतप्राकृतैकताम् ।
तथा वचनयोः साम्यं धर्मिधर्माभिधायि च ॥१॥
कवयः कुर्वते शक्ताः समस्यापूरणादिकम् ॥
आद्यं चतुष्टयं तत्र चित्रकाव्योपकारकम्(१) ॥२॥

गतागतेत्यादि यथा—'मम रुरु मध्यम सहास कारिका वररव वनदानव सरसीरस गजभुजग तरुणीरुत रदसोदर नदभेदन वरभैरव कलपुलक पतदातप' इत्यादि । चकारादसाम्येऽपि स्फुटार्थता यथा—राजा(२) नदी मालिका राजते दीनरक्षी पिनाकिना नन्दनवन सहसानुत(३)इत्यादि । रेजिरे बभूव तिष्ठती'त्याख्याते । संस्कृतेत्यादि । तत्र पुंल्लिङ्गे—

हाराहारविहारसारसमराः सम्भोगभोगा(४)ध्वराः
संहारामरवारवारणरणाष्टङ्कारवीरा(५)कराः ।
लोलोल्लास(६)विलासवायसहराऽहङ्कारहीराङ्कुरा
नीहारोरगताररागतरला गोविन्दकन्दोद(७)नाः ॥

स्त्रीलिङ्गे—

धरणी धारणी गोणी रोहिणी रमणी मणी ।
कन्दली लहरी रम्भा(८) नारी भेरी वसुन्धरा ॥

---

(१) आदिचतुष्टयं चित्रकाव्योपकारकम्-इति कपु० पाठः
(२) जारा-इति खपु, जरा-इति घपु० पाठः ।
(३) सात्वनुत-इति कपु०,सात्वत-इति च खपु० पाठः ।
(४) रोगाम्बराः-इति ख,घपु० पाठः ।
(५) तीराकराः-इति खपुस्तके ।
(६) लोलोल्लाघ-इति कपु०, लोलोल्लोल-इति च घपु० पाठः ।
(७) कन्दोदराः-इति खपु० पाठः ।
(८) रामा-इति ख,घपु० पाठः ।

नपुंसके—

जलफलपलमूलं वारिकीलालतूलं
वनपललदुकूलं तूण(१)गम्भीरकूलम् ।
सलिलकमलचीरं स्वर्ण(२)राजीवनीरं
हलरजतकुटीरं दारुनालं पटीरम् ॥

भण गच्छ देहि संहर कुरु रोचय मारयाऽवगच्छैहि ।
अवलोकयाऽत्रचिन्तय खादेति च(३)धातुजं विद्धि ॥

एकस्मिन्नेवार्थे बहुवचनैकवचनयोः साम्यं यथा—

क्रव्यादो देवरो वारि फलिनो बर्हिणो नरः ।
तादृशो भूरुहाद्याश्च मासफेरत्रसोमपाः ॥
एवं रथिनमन्थानशब्दाः खुरणसादयः ।

धर्मिधर्माभिधायि पदं यथा—

सुषिरार्द्रप्रतीहारचुल्लिपिल्लादिशत्रवः ।
स्मेरालसौ मत्सरश्च धर्मिधर्माभिधायकाः ॥

चकाराद्विशेषसामान्यवाचकभावाऽभाववाचकपरिग्रहः ।

तदुक्तम्—

शकुन्तधातुमरुतो गरुत्मत्कामदर्शनम् ।
अक्षं वधूश्च गमनं चेटकाद्या(४)द्विवाचकाः ॥
अपिधानाद्यपूपादिभावाभावप्रदर्शनम् ।

आदिपदात् आरादयुतभिन्नावतंसादि(५)परिग्रहः ।

इत्यलङ्कारशेखरे कविसामर्थ्यरत्ने
चित्राद्युपकारमरीचिः ।

---

(१) तुङ्ग–इति क,खपु० पाठः । (२) तुच्छ–इति क,खपुस्तकयोः ।
(३) प्रवदेति च–इति घपु० पाठः ।
(४) स्वच्छबंधूस्वगमनचटकाद्या–इति कपु० पाठः ।
(५) आनादयुक्तसिद्धावलग्नावतंसादि–इति खपु० पाठः ।

समस्यापूरणादिकमिति । इदं तु कठिनसमस्याभिप्रायेण । तदुक्तं–'कवयः कुर्वते शक्ता' इति । तत्रैवं प्रकारः—

यदीदं स्यात्तदेदं स्यात्कर्ता विषयमेति च ।
अयोग्यः खलु कः शब्दः कुत्र संसर्गधीर्न हि ॥

प्रश्नोत्तरात्पदे भङ्गात्पूर्वस्मिन्नाद्ययोजनात् ।
मिथ्याभिधाय्यसावेवमेष सार्वत्रिकः क्रमः ॥

प्रश्नेति ।

के मण्डयन्ति स्तनमण्डलानि कीदृश्युमा चन्द्रमसः कुतः श्रीः ।
किमाह सीता दशवक्त्रनीता हारामहादेवरतातमातः ॥

पदे इति । 'मृगात् सिंहः पलायते' इत्यादौ । मृगमत्तीति मृगात् ते पलाय मांसाय इत्यर्थकरणात् । पूर्वस्मिन्निति । 'प्रत्यर्थिकीर्ति-निर्जितकज्जलधवलं जपाकुसुम'मिति यावत् । अत्रान्तरप्रकारस्तु—

एतत्स्वप्ने मया दृष्टं चित्रन्यस्तं विलोक्यताम् ।
अरिष्टमेतत्सञ्जातमिन्द्रजालं विभावय ॥
प्रबोधयतिबालांश्च यथायोग्यं प्रपूरयेत् ।

सुबोधमिदम् । प्रकारान्तरं तु—

देवर्षिवरशापाद्यैर्मणिमन्त्रौषधादिभिः ।
मनोरथेन तपसा पापात्पुण्यचयेन च ॥
मायया शम्बरादीनां सर्वं संभावयेत्कविः ।

अत्रादौ द्वन्द्वद्वयम् । तपस्तात्कालिकं पुण्यम् । श्रीपादस्तु—
रागवात्सल्यशोकाद्यैर्वियोगे(१)न मदेन च ।
मतिभ्रमेण शौर्येण विपरीतकरः पुमान् ॥

---

(१) विनयेन–इति कपुस्तके ।

इत्याह । विशेषस्तु(१)--

कल्पाद्यब्ध्यणु(२)संसर्गप्रीतिचक्षुःष्वणुर्महान् ।
युगान्ततिमिदूरोच्च(३)निकटे महदप्यणु ॥

हरेरधोमुखत्वेन बिम्बाच्च विपरीतता ।
दृक्पीडनात्तनुव्यूहाद्भ्रावनाद् बिम्बतो बहु ॥

तमोऽकीर्त्यादिभिः कार्ष्ण्यं शौक्ल्यं ज्योत्स्नादिकीर्तिभिः ।
लौहित्यं रक्तपीतादिसन्ध्यारत्नाधरा(४)दिभिः ॥

तिमिर्वृद्धताप्रयुक्तचक्षुर्मान्द्यम् । इदं च 'शैलीयति पिपीलिका' इत्यादौ, 'मशकीयति कुञ्जर' इत्यादौ, 'विपरीतोऽभवज्जन' इत्यादौ, 'एकोऽपि स शतं नृप' इत्यादौ, 'मषीयति जगत्त्रय'मित्यादौ, 'श्वेतद्वीपायते जगत्' इत्यादौ, 'पद्मरागायते जगत्' इत्यादौ क्रमेण बोद्धव्यम् । कासांचित्समस्यानां नानाभुवनीयसंसर्गविषयत्वात् (५)तत्प्रकाराः प्रदर्श्यन्ते—

जगतः प्रलये भूमिर्मौर्गरुत्मत्सुधो(६)द्धृतौ ।
बलीन्द्रौ(७) हाटकेशीययात्रायां द्वौ रसातले ॥

हाटकेशः पातालशम्भुः(८) । रसातले इति त्रितयान्वयि(९) ।

---

(१) असाधारण्येन तत्प्रकारस्तु–इति ख,घपु० पाठः ।
(२) कल्पाद्यद्ध्यण्ड–इति कपु० पाठः ।
(३) युगान्ते चातिदूरोच्च–इति कपु० पाठः ।
(४) रत्नकरादिभिः–इति खपु० पाठः ।
(५) भुवनसंसर्गत्वात्–इति कपुस्तके ।
(६) सुधोद्धता–इति खपु० पाठः ।
(७) बलीष्टौ-इति खपु० पाठः ।
(८) हाटकेशः पातालशम्भुः–इति कपुस्तके नास्ति ।
(९) तृतीयान्वयि–इति कपु० पाठः ।

तथा—

द्यौर्बिम्बेन जले (१)शार्ङ्गी त्वब्धिमन्थे द्वयं भुवि।

भुवीत्युभयान्वयि। तथा—

पातालं वानरो(२)त्क्षिप्तचन्दनद्रुमपन्नगैः।

ध्वजप्रासादधूलीभिर्भूमिः स्वर्गमुपाययौ॥

श्रीकृष्णस्योदरे सर्वसंसर्गः सार्वकालिकः।

'पातालं भूमिश्च स्वर्गं ययौ'इत्यन्वयः।

अगस्त्याऽम्भोधिपानादिपौराणिककथाशतैः।

शिवादिदेवसंचारैः सादृश्यैः सर्ववर्णनम्॥

शिवादीति। यत्र शिवो याति तत्र तन्नान्तरीयकतया सर्पचन्द्रानलादीनामपि गमनमावश्यकमित्यर्थः। सादृश्यैरिति। लक्षणया 'सूच्यग्रे पर्वतद्वय'मित्यादौ। औचित्येन—

संग्रामे कुम्भिमुक्ताभिर्दिवा तारकितं नभः।

इत्यादौ। राजशेखरस्तु—

उत्पाटितैर्नभोनीतैः शैलैरामूलबन्धनात्।

तांस्तानर्थान् समालोच्य समस्यां पूरयेत्कविः॥

इत्याह। वृद्धास्तु—

कः प्रत्येति प्रतीमो न द्राक् प्रत्येमि प्रतीहि च।

नहि नो तत्किमित्याद्यै(३)रुक्तिमाश्रित्य पूरयेत्॥

यथा—

पराजितश्चेद्भगवान् जरासन्धेन जन्तुना।

प्रतीतिरद्य मे जाता मृगात् सिंहः पलायते॥

---

(१) जलेशाद्योरब्धि-इति ख,घपु० पाठः।

(२) वारणे क्षिप्ते-इति कपु० पाठः।

(३) न क्रिमित्याद्ये-इति घपुस्तके।

मा संभावय शल्येन फाल्गुनस्य पराजयम् ।
कः प्रतीयात्कुरुश्रेष्ठ ! मृगात् सिंहः पलायते ॥
नहि गाण्डीवकोदण्ड(१)मृगात् सिंहः पलायते ।
तत्किं कमलपत्राक्ष ! मृगात् सिंहः पलायते ॥

सुबोधमखिलम् । तार्किकास्तु(२)—

शब्दादुच्छलिते सिन्धौ शैलाण्डादौ विदारिते ।
त्वत्प्रतापाद्द्रवीभूते स्वर्णाद्रौ(३) मलिने रवौ ॥
विरहे सर्वं दहनः सन्तोषे सर्वमेव शशी ।
कामिनि सर्वं काम्यं शान्ते लोष्टायते विश्वम् ॥
वैशेषिकेषु काव्येषु गुणेषूत्कृष्टमन्दयोः ।
अपेक्षायां च संसर्गे स्यातामुत्कृष्टमन्दते ॥

वैशेषिकेषु रूपादिपञ्चसु । काव्येषु । गुणेषु शौर्योदार्यसौन्दर्यादिषु । अपरिकलितकाव्यसरणिगीश्वरं वशीकर्तुमनतिचिरमनुसरन् कविः—

अव्ययैरजहल्लिङ्गैः साधारणविशेषणैः ।
छन्दो ज्ञात्वा पृथग्वाक्यैः स्वबुद्ध्या मानसीं श्रयेत् ॥

समस्यं पदं वाक्यमिति स्मर्तव्यम्(४) ।

शिशूनां गतयेऽस्माभिर्दिङ्मात्रमिह दर्शितम् ।
काव्यकान्तारपान्थानामीदृगर्थे कियान् श्रमः ॥

इति श्रीमाणिक्यचन्द्रकारिते अलङ्कारशेखरे
कविसामर्थ्यरत्ने समस्यापूरणादिमरीचिः ।

---

( १ ) कोदण्डो मृगादित्यादि–इति कपु० पाठः ।
( २ ) तार्किकास्तु–इति कपुस्तके नास्ति ।
( ३ ) स्वर्णाद्यण्डादितैजसे–इति खपु० पाठः ।
( ४ ) समस्यापदं वाक्यं स्मर्तव्यम्–इति क,पु० पाठः ।

## अष्टमं रत्नम् ।

'रस आत्मे'त्युक्तम् । तत्र यथात्मानं विना शरीरमप्रयोजकम्, तथा रसं विना काव्यम् । यथाह—

साधुपाकेऽप्यनास्वाद्यं भोज्यं निर्लवणं यथा ।
तथैव नीरसं काव्यं न स्याद्रसिकतुष्टये ॥

तत्र रसत्वमङ्गाङ्गिभावापन्नसकलविभावादिसाक्षात्कारकत्वम् । विशेषणं(१) समूहालम्बनवारणाय । रसत्वमपि जातिरिति वयम् । केचित्तु—

कारणेनाऽथ कार्येण सहकारिभिरेव च ।
व्यक्तत्वं नीयमानस्तु स्थायी भावो रसः स्मृतः ॥

कारणमङ्गनानवयौवनादि । कार्याणि—

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलयावित्यष्टौ सात्विका मताः ॥

सहकारिण उद्यानादयः । व्यभिचारिणो ग्लान्यादयः । यदाहुः—

विभावैरनुभावैश्च सात्विकैर्व्यभिचारिभिः ।
आरोप्यमाण उत्कर्षं स्थायी भावो रसः स्मृतः ॥

तमिदानीं विभजते—

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साऽद्भुतशान्ताश्च काव्ये नव रसाः स्मृताः॥१॥

शृङ्गारत्वहास्यत्वादिकं जातिविशेष एव(२)। व्यक्तिप्रश्नस्तु सुखज्ञानात्मकरसवादिमतेन भवत्येवेति दिक् । तत्र शृङ्गारं विभजते—

सम्भोगो विप्रलम्भश्च शृङ्गारो द्विविधः स्मृतः ॥

---

(१) अङ्गाङ्गीत्यादि समूहा-इति ख,घपु० पाठः ।
(२) वाक्यमिदं कपुस्तके नास्ति ।

तत्र स्त्रीपुंसलक्षणेष्टप्राप्तौ रतिरेव सम्भोगः । तदुक्तम्—

अनुरक्तौ निषेवेतां यत्रान्योन्यं विलासिनौ ।
दर्शनस्पर्शनादीनि सम्भोगोऽयमुदाहृतः ॥

तत्र नायिकाश्रयः सम्भोगो यथा—

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥

आलोक्य नम्रमुखीत्यन्वयः । नायिका चतुर्धा--

अनूढा च स्वकीया च परकीया पणाङ्गना(१) ॥ २ ॥
त्रिवर्गिणः स्वकीया(२) स्यादन्याः केवलकामिनः ॥

तत्र—

अनुरक्ताऽनुरक्तेन स्वयं या स्वीकृता भवेत् ॥३॥
साऽनूढेति यथा राज्ञो दुष्यन्तस्य शकुन्तला ॥
देवतागुरुसाक्ष्येण स्वीकृता स्वीयनायिका ॥४॥
परकीयाऽप्यनूढैव विशेषस्तु स्फुटस्तयोः ॥
सामान्यवनिता वेश्या भवेत्कपटपण्डिता ॥५॥
नहि काश्चित्प्रियस्तस्या दातारं पुरुषं (३)विना ॥

अस्याः प्रकाशोऽन्यासां प्रच्छन्नो रमण इति विशेषः । ताश्चाष्टधा-

खण्डितोत्कण्ठिता प्रोष्यत्पतिका(४) चाभिसारिका ॥६॥
कलहान्तरिता वासकसज्जा विप्रलब्धिका ॥
स्वाधीनभर्तृका चान्या चतस्रोऽप्यष्टधा मताः ॥७॥

---

(१) वराङ्गना-इति कपु०, पराङ्गना-इति च घपु० पाठः ।
(२) त्रिवर्णिनः-इति कपुस्तके ।
(३) नायकं-इति क,घपु० पाठः ।
(४) खपुस्तके प्रोषितपतिका-इति पाठः । सचाशुद्ध एवेत्युपेक्ष्यः ।

नायकाश्रयो यथा—

त्वं मुग्धाक्षि! विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः॥

रूपसौभाग्यसम्पन्नः कुलीनः कुशलो युवा॥
अनुद्धतः सूनृतवाङ् नायकः प्रीतये स्त्रियाः॥ ८॥

अयं बहुप्रकारोऽपि संक्षेपेण चतुर्विधः।

अनुकूलो दक्षिणश्च शठधृष्टौ च ते यथा॥
नीलीरागो(१)ऽनुकूलः स्यादनन्यरमणीरतः॥ ९॥
दक्षिणश्चाऽन्यचित्तोऽपि यः स्यादविकृतः स्त्रियाम्॥
प्रियं वक्त्यप्रियं तस्याः कुर्वन् यो विकृतः(२) शठः॥१०॥
धृष्टो ज्ञातापराधोऽपि न विलक्षोऽवमानितः॥

विप्रलम्भस्तु—

भावो यदा रतिर्नाम प्रकर्षमधिगच्छति॥ ११॥
नाधिगच्छति चाभीष्टं विप्रलम्भः स उच्यते॥

अभीष्टं स्त्रीपुंसलक्षणमेव। स च—

पूर्वानुरागो मानात्मा प्रवासः करुणात्मकः॥ १२॥
विप्रलम्भश्चतुर्धा स्यात्पूर्वपूर्वो ह्ययं गुरुः॥

तत्र—

स्त्रीपुंसयोर्नवाऽऽलोकादेवोल्लसितरागयोः॥ १३॥
ज्ञेयः पूर्वानुरागोऽयमलाभादतिकामयोः॥

यथा—

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि।

---

(१) लीनरागो–इति कपुस्तके पाठः प्रकृतविरुद्धः।

(२) कुर्वन्नविकृती–इति कपुस्तके।

यास्त्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥
अथाऽन्यवनितासक्तमवगम्य स्ववल्लभम् ॥ १४ ॥
ईर्ष्यावशेन वैमुख्यमेष मान उदाहृतः ॥

यथा—

सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाऽङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥
प्रवासः परदेशस्थे द्वितीये विरहोद्भवः ॥ १५ ॥

यथा—

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ॥
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥

इत्यादि ।

स्यादेकतरपञ्चत्वे दम्पत्योरनुरक्तयोः ॥
शृङ्गारः करुणाख्योऽयमजस्येव रतेरिव(१) ॥१६॥

ननु शृङ्गारस्य रतिप्रकृतित्वात्तस्याश्च सुखसंवेदनरूपत्वा-त्तस्य विप्रलम्भेऽसम्भवात् (२)स कथं शृङ्गारभेद इति चेन्न, 'धन्योऽहमस्याः कृते दशामिमामनुभवामि' इति तत्रापि तद-भिमानात्(३) । क्वचित्सम्भोगपोषकत्वेन स्पृहणीयत्वाच्चेति वि-

---

(१) विप्रलम्भेऽभावात्–इति कपु० पाठः ।
(२) स्यन्दुमतीरिव–इति घपु० पाठः ।
(३) तदभिधानात्–इति कपु० पाठः

स्तृतं मयैव काव्यरत्ने(१) । श्रीपादस्तु--

रतिर्भवति देवादौ मुनौ पुत्रे नृपे गुरौ ।
शृङ्गारस्तु भवेत् सैव या कान्ताविषया रतिः ॥

तत्र देवे यथा—

कण्ठकोणविनिविष्टमीश ! ते कालकूटमपि महामृतम् ।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते ॥

मुनौ यथा--

हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम्॥

पुत्रे यथा—

एह्येहि वत्स ! रघुनन्दन ! पूर्णचन्द्र !
चुम्बामि मूर्ध्नि सुचिरं च परिष्वजे त्वाम् ।
आरोप्य वा हृदि दिवानिशमुद्वहामि
वन्देऽथवा चरणपुष्करकद्वयं ते ॥

नृपे यथा—

ते कौपीनधनास्त एव हि परं धात्रीफलं भुञ्जते
तेषां द्वारि नदन्ति वाजिनिवहास्तैरेव लब्धा क्षितिः(२)॥
तैरेतत्समलंकृतं निजकुलं किंवा वहु ब्रूमहे
ये दृष्टाः परमेश्वरेण भवता तुष्टेन रुष्टेन वा ॥

गुरौ यथा—

हा तात ! विश्वजनवत्सल ! मामकीन-
जीवौषध ! द्युमणिवंशवतंसभूत ! ।
स्यां चेद्भवत्कुलजसद्मनि चेटकः स्यां
यद्वा भवच्चरणपङ्कजरेणुरेव ॥

---

(१) वाक्यरत्ने-इति कपुस्तके ।

(२) स्थितिः-इति खपुस्तकस्थः पाठ एकार्थकत्वादनुपयुक्तः ।

हासमूलः समाख्यातो हास्यनामा रसो बुधैः ॥
चेष्टाङ्गवेषवैकृत्याद्वाच्यो हासस्य चोद्भवः ॥१७॥
कपोलाक्षिकृतोल्लासो भिन्नोष्ठः स महात्मनाम् ॥
विदीर्णास्यश्च मध्यानामधमानां सशब्दकः ॥ १८ ॥

यथा—

नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः ।
तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥

शोकोत्थः करुणो ज्ञेयस्तत्र भूपातरोदने(१) ॥
वैवर्ण्यमोहनिर्वेदप्रलयाश्रूणि वर्णयेत् ॥ १९ ॥

यथा—

मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी ।
गतिस्तयोरेष जनस्तमर्दयन्नहो विधे ! त्वां करुणा रुणद्धि नो ॥

क्रोधात्मको भवेद्रौद्रः क्रोधप्रौढ्या च वैरिणः ॥
भीष्मवृत्तिरसामान्यो भवेदुग्रक्रियाश्रयः ॥२०॥
स्वांसघातस्वशंसाऽस्त्रोत्क्षेपभ्रुकुटयस्तथा(२) ॥
अत्राऽरातिजनाक्षेपो दलनं चोपवर्ण्यते ॥ २१ ॥

यथा—

कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥

उत्साहात्मा भवेद्वीरो बलशास्त्राश्रयश्च सः ॥
नायकोऽत्र भवेत्सर्वैः श्लाघ्यैरभि(३)मतो गुणैः ॥२२॥

---

(१) भूयास्तु रोदनम्–इति कपु० पाठः ।

(२) स्वयं शस्त्रोत्क्षेप–इति कपु०, स्वासाघातस्वशस्त्रास्त्रोत्क्षेप-इति घपु० पाठः ।

(३) रधिगतो–इति खपु० पाठः ।

यथा—

क्षुद्राः ! संत्रासमेते विजहित हरयो ! भिन्नशक्रेभकुम्भा !
युष्मद्गात्रेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे ! तिष्ठ पात्रं त्वमसि नहि रुषां नन्वहं मेघनादः
किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥

भयानको भवेद्भीतिप्रकृतिर्घोरवस्तुनः ॥
स च प्रायेण वनितानीचबालेषु दृश्यते ॥ २३ ॥
दिगालोकाऽऽस्यशोषाङ्गकम्पगद्गदसंभ्रमाः ॥
स्तम्भवैवर्ण्यमोहाश्च वर्ण्यन्ते विबुधैरिह ॥ २४ ॥

यथा—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् ।
शष्पैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥

बीभत्सः स्याज्जुगुप्सातः सौहृद्यश्रवणेक्षणात् ॥
निष्ठीवनास्यभङ्गादि स्यादत्र महतां नच ॥ २५ ॥

यथा—

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रगन्धीनि जग्ध्वा ।
आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥

विस्मयात्माऽद्भुतो ज्ञेयः स चाऽसंभाव्यवस्तुनः ॥
दर्शनाच्छ्रवणाद्वापि प्राणिनामुपजायते ॥ २६ ॥

